Bharatee-Mandiram Sanskrit Series.

No. 2.

# Ananda Lahari

(the quintessence of Srikantha Bhashya)

BY

**Appayya Dikshita**

WITH HIS OWN COMMENTARY CALLED

**Chandrika.**

EDITED AND PUBLISHED BY

**Pandit R. HALASYANATHA SASTRY,**

*Sanskrit Pandit, Native High School, Kumbaconam.*



SRIRANGAM:
SRI VANI VILAS PRESS.
1908.

 *[Price Rs. 1-8-0.*

श्रीमदानन्दवल्लीयमप्पयाध्वरिणा कृता ।
फलति ब्रह्मविज्ञानफलं बुद्धिजालाप्लुता ॥

॥ ओम् ॥

“भारतीमन्दिरसंस्कृतग्रन्थावलिः”

ग्रन्थांकः २.

श्रीमदप्पयदीक्षितकृता

# ॥ आनन्दलहरी ॥

श्रीकण्ठभाष्यपरमतात्पर्यनिर्णयरूपा

तत्कृतया

चन्द्रिकाख्यया व्याख्यया सहिता ।

कुम्भघोणस्थ

स्वदेशीयहूणवाणीमहापाठशालागीर्वाणवाण्यध्यापकेन

रा. हालास्यनाथशास्त्रिणा

बह्वीः प्रतिकृतीस्संपाद्य परिशोधिता ।



श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रिता ।

१९०८.

अस्य मूल्यं सार्धं रूप्यमेकम् ।

# ॥ भूमिका ॥



१. आर्यमिश्राः सहृदयाः विदितचरमेव तत्र भवतां, यदहं बहोः कालाल्लुप्यमानप्राचीनप्रबन्धप्रकटने धृतव्यवसायस्सहृदयानां साहाय्येन **रसिकरञ्जनीटीका**सहितं **कुवलयानन्दमुज्ज्वला**संवलित**मापस्तंबधर्मसूत्रप्रबन्धं** च सम्मुद्य प्रकटीकृत्य पात्रतामनयमात्मनो जन्म सहृदयकुलाशीर्वचसामिति ।

२. अनन्तरमाकलय्य **श्रीमदप्पयदीक्षितेन्द्र**विरचितानां शताधिकानां प्रबन्धानामतिलुप्तानां विरलमातृकतया प्रचाराभावं पुस्तकदौर्लभ्यं च तेषां प्रकटने धृतव्यवसायश्शुभकृद्वत्सरे **मार्गशीर्षमासि** डिल्लीनगरप्रवर्तितराजाधिराजमहनीयगुणाभिरा**मैड्वर्डभि**ख्यास्माककरुणार्णवभरतखण्डचक्रवर्तिपट्टाभिषेकमहोत्सवदिने प्रातिष्ठिपं प्राक्तनग्रन्थप्रथनालयं **भारतीमन्दिराभिख्यम्** ।

३. तत आरभ्य ततो मया प्रचारयितुमुपक्रान्तायां **भारतीमन्दिरसंस्कृतग्रन्थावलौ** प्रथमतः **श्रीमदप्पयदीक्षित**कृतया **शिवार्कमणिदीपिकया** सहितं श्रीमच्छ्रीकण्ठीयं **ब्रह्मसूत्रभाष्यं नयमणिमालया** मन्निबद्धया **ब्रह्मसूत्रार्थचन्द्रिकया** च सह सनाथीकृत्य परिष्कृत्य सम्मुद्य षड्भिस्संचिकाभिरियता कालेन समपूरयं पृष्ठषट्शतीपरिमितं प्रथमसंपुटम् । यस्य च द्वितीयं संपुटमपि संमुद्र्यमाणं न चिरात्तिसृभिः संचिकाभिः परिपूर्येत ।

४. तस्य ग्रन्थस्य मुम्बानगरे मुद्र्यमाणतया अपरिहार्य-कालातिपाततामवधाय विपुलस्य तस्य ग्रन्थस्य समाप्तेः पूर्वमेव **श्रीकण्ठभाष्य**प्रस्थानानुसारिणः श्रीमदप्पयदीक्षितकृता**नन्दलहरी-शिवाद्वैतनिर्णय**प्रभृतीन्प्रबन्धान्सम्मुद्र्य प्रकटीचिकीर्षुर्द्वितीयतया **श्रीरङ्गस्थश्रीवाणीविलासमुद्रणालये चन्द्रिका**ख्यया व्याख्यया सहितां **श्रीकण्ठभाष्य**परमतात्पर्यप्रतिपादिनी**मानन्दलहरीं** सम्मु-द्र्य प्रकटयितुं प्रावृतम् ।

५. अस्याश्च कृतेरतिलुप्तप्रचारतया विरलमातृकतया संप्र-तिपन्नपण्डितकुलैरप्यविदिततया च नष्टकल्पाया अन्वेषणे धृतव्यव-सायस्य मम श्रीमता सहृदयकुलमूर्धन्येन श्रीमदप्पयदीक्षितेन्द्रवंश्य-मामकाश्रयभूतसुप्रसिद्ध**ाप्पुशास्त्रि**समनन्तरसोदरेण प्राड्विवाकपदमधि-तिष्ठता **महादेवशास्त्रिणा** श्रीमन्मध्यार्जुनक्षेत्रस्थश्रीमन्महालिंगे-श्वरदिव्यालयप्रतिष्ठापितपुस्तकालयात्तदध्यक्षस्य (तिरुवावडुतुरै नामक) श्रीगोमुक्तिक्षेत्रविराजमाननन्दिकेशाधिष्ठितशैवमठाधिपते**रंबलवाणदे-शिकस्या**ज्ञया समानीय विलेखिता नागराक्षरमयी काकितरूपा मातृका तन्मूलभूता ताळपत्रमयी मातृका चेत्युभयरूपा मातृकैकैव प्रथमगो-चरतयैतन्मुद्रणप्रवृत्तिनिदानतया च महोपकारिणी समभूत् ।

६. अनन्तरमान्तं तां सश्रद्धं परिशीलयतश्चिराद्वैतमदधी-च्यादिशापसंजातशांभवोत्कर्षविद्वेषकलुषस्वान्तैर्वैष्णवंमन्यैः कैश्चिद-न्यैश्च शुद्धाद्वैतमतैकतानतामभिनयद्भिरनवगताद्वैतमतसिद्धान्तैरसूया-परैः पण्डितंमन्यैश्चोदीरितान् श्रीमदद्वैतविद्याचार्याणामप्पयदीक्षिते-न्द्राणामपि तान्त्रिकशैवसिद्धान्तानुयायितां विष्णुविद्वेषितां च रुशतो वितण्डावादान्कर्णारुन्तुदाञ्श्रावंश्रावं विषण्णचेतस्कतया तदात्वे सु-

धारसाभिवर्षेणेव शिशिरितान्तःकरणस्य मम न चिरादस्याः कृतेः प्रकटने समुदभूद्दृढतरा लालसा। यदस्यां कृतौ सुस्पष्टं श्रीकण्ठभाष्यप्रस्थानस्यापरित्यक्तशुद्धाद्वैततया भगवत्पादीयभाष्यप्रस्थानादनतिभिन्नतां सगुणोपासननिरूपणस्य निर्गुणोपासनप्रथमसोपानतां च व्यवस्थापयन्तः स्वस्य विष्णुविद्वेषलेशराहित्यं शुद्धाद्वैतमतैकतानतां च कण्ठोक्त्यैव विवृण्वन्तस्ते **दीक्षितेन्द्रा**स्तानुभयानपि वैतण्डिकान्बालिशान् चपेटाघातेन तूष्णींभावमापाद्य **श्रीकण्ठाचार्याणा**मपि शुद्धाद्वैते परमतात्पर्याभिव्यक्तिं तद्भाष्यवाक्यैरेव व्यवातिष्ठिपन्।

९. ततश्च तां मे लालसां परिपूरयितुं मया कृताभ्यर्थनो मन्मुखादसकृत्समाकर्णितेदंग्रन्थपरमार्थतया समनुमोदितमामकीनाशयः श्रीमानुदारधीः प्रभुमणिः **श्रीनिवासपिल्लै**नामा विरचितद्रव्यसाहाय्यश्चिन्तनीयो मया कार्त्स्न्येन सर्वोद्यमेषु विशेषतश्चेदंग्रन्थप्रथनोद्योग इति निवेदये सहृदयान्।

१०. अनन्तरं द्वितीयमातृकान्वेषिणा मया **चित्तूर्नगरस्थ**-(भूतपूर्व) **सच्चिदानन्दशा**स्त्रिगृहकोशान्महता प्रयासेन संपाद्य सुहृन्मणिना **कुलित्तलै** नगरस्थप्राड्विवाकस्थललेखकोद्योगमधितिष्ठता **रङ्गस्वाम्यार्येण** प्रहिता तालपत्रमयी मातृका सहादरमुररीकृता या चात्र **ख**. चिह्निता।

११. अन्या च श्रीमत्**पञ्चनदस्थला**भिजनमामकब्रह्मविद्यगुरुचरणसर्वतोमुखमहाव्रतविश्वजिद्याजि **श्रीबालकृष्णमखिराज**समनुगृहीता सप्रणाममुररीकृता तृतीया मातृकापि **ग** चिह्निता महोपकारिणी।

१२. अपरा च **तञ्जासंस्थान**स्थिततालवन (**तिरुप्पनन्दाळ्**) शैवमठालयस्थपुस्तककोशगता तदध्यक्षेण **काशिवासि**-

**सोमसुन्दरतम्बिरान्प्रभुणा** वितीर्णा सीतालतालपत्रमयी तुरीया मातृका चात्र ङ चिह्निता ।

१३. एताश्चतस्रो मातृका उपजीव्य परिशोध्य मुद्रणाय सज्जीकृत्यापि द्रव्यसाह्यप्रतीक्षितया व्यलंबिषि कंचित्कालम् ।

१४. तदानीमेतादृशमदीयव्यवसायप्रोत्साहकस्य **तञ्जान-गरस्थप्राड्विवाकस्थलन्यायवादिनो** महाशयस्य **श्रीनिवासपिल्लैना-म्नस्सहृदयमणेस्सुहृन्मणेस्साहाय्यमेवास्य** प्रबन्धस्य संमुद्रणे हस्ताव-लंबप्रदानेन प्रोत्साहकमभूदिति कार्तज्ञ्यतस्समभ्यर्थयेऽनुदिनमस्मत्कु-लदेवतस्यैन्दवकिशोरशेखरस्य सन्निधाने तदीयमभ्युदयम् ।

१५. पद्यषष्टिपरिमिता चन्द्रिकाख्यव्याख्यासहितेयमणीयसी कृतिः श्रीकण्ठभाष्याधिकरणकतिपयशंकासमाधाननिर्णयात्मकतया श्रीकण्ठभाष्योपोद्धाततामंचतीतीयमवश्यं परिशीलनीया श्रीकण्ठभा-ष्यपठितॄणां सहृदयानामिति निवेदये सुहृदः ।

१६. इदंग्रन्थपरिशोधने क्वचित्क्वचित्संशयाविष्टस्य मम संशयान्निरसितुं कृतक्षणतामवलंब्य प्रसेदुषे विषयसूचिनीलेखनेन च साह्यकृते श्रीमन्महामहोपाध्यायराजुशास्त्र्यपरनामधेय (भूतपूर्व) **त्यागराज**मखिराजचरणसेवासमासादितपणनीयपाण्डित्याय प. **गण-तिशास्त्रिणे** धृतकार्तज्ञ्यस्समर्पयामि बह्वीर्विनतीः ।

१७. इदंव्यवसाये मातृकाप्रदानादिना विहितोपकारेभ्यः पूर्वोद्दिष्टनामधेयेभ्योऽभिरूपशेखरेभ्यः प्रत्यर्पयामि यथोचितं परस्स-हस्रं प्रणामानाशिषश्च ॥

१८. यद्यप्ययं प्रबन्धो मुद्रणकालेऽसकृत्परिशोधित एव । तथापि नात्र स्यादशुद्धिः कियत्यपीति वक्तुं न पारयामि तत्रभवताम-

भिज्ञानां पुरस्तात् । मदीयेन व्युत्पत्तिमान्द्यादिदोषेण अनवधानेन च समापतिता अक्षरच्युतिप्रभृतयोऽतिविरला दोषास्सुबोधा एव सुदृशामिति नाहमयूयुजं शुद्धाशुद्धपत्रीम् । यदि स्युरन्येऽप्यसंशोधिता दोषास्तानन्विष्य विलिख्य प्रेषणेनानुग्राह्योऽहमित्यभ्यर्थये सुहृन्मणीनावेदये च तान्परिशोधयिष्यामि द्वितीयसंस्करण इति ।

१९. अन्यच्च । इदंग्रन्थसमाप्तौ श्रीमदप्पयदीक्षितकृतिमरुणाचलेश्वरप्रणयिन्या अपीतकुचांबिकायाः स्तुतिमपि सहृदयमनः समाह्लादनकृते संमुद्य प्राचीकशम् ।

२०. अस्यां ग्रन्थावलौ मया संमुद्यमाणमिमं प्रबन्धं प्रकटीचिकीर्षितानन्यांश्च समाकर्ण्य परमानुग्रहसंप्रसादाभिव्यञ्जनेन मयि भृशं प्रासीदन् श्रीमत्परमहंसपरिव्राजकेत्यादिविरुदावल्यङ्किताः श्रीमन्तोऽव्याजकरुणानिधयो महामहिमभरिताश्शृंगगिरिस्थजगद्गुरुपीठाधिपाः **श्रीमत्सच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिन** इत्यतो द्विगुणीकृतोत्साहस्सांप्रतमर्पितकर्मभरस्सद्गुरुसन्निधाने सुदृढं विश्वसिमि निरंतरायमस्या ग्रन्थावलेरविलंबं प्रचारमितः परमिति शिवम् ।

इत्थं

सहृदयचरणांबुजदासः

**रा. हालास्यनाथशास्त्री.**

॥ श्रीः ॥

# ॥ आनन्दलहरीविषयसूचिका ॥

**प्रथमश्लोके** १.—'ब्रह्मविदाप्नोति' त्याद्यानन्दवल्ल्यां मान्त्रवर्णिकं परमं व्योम पारमेश्वरी चिच्छक्तिरेव, सैव आनन्दमय इत्युपरिष्टादुपपाद्यते इति निरूपणम् ।

**द्वितीये** २.—आनन्दमयपदं न प्रचुरानन्दविशिष्टं कंचिद्धर्मिणमाह, किंतु प्रचुरमानन्दमेव । स च उक्तचिच्छक्तिरूप एव । अत्र चार्थे 'यदेष आकाश आनन्दो न स्यात्' इति वाक्यशेषोऽपि प्रमाणमिति ।

**तृतीये** ३.—आनन्दशब्देनानन्दमात्रग्रहणे कस्यायमानन्द इति जिज्ञासायां ब्रह्मणः परमेश्वरस्येति पुच्छवाक्यादिव 'स एको ब्रह्मण आनन्द' इति वाक्यादपि लभ्यत इति कथनम् ।

**चतुर्थे** ४.— पूर्वार्धेन आनन्दमयो ब्रह्मेति पक्षेऽनुपपत्तिप्रदर्शनम्, उत्तरार्धेन 'तस्माद्वा एतस्मात्' इत्यादिना निरूपितजगत्कारणत्वस्यात्मत्वस्य चानुपपत्तिरिति सप्रमाणं कथनम् ।

**पञ्चमे** ५.—'यो विज्ञाने तिष्ठन्' 'य आत्मनि तिष्ठन्' इति शाखाद्वयाम्नातान्तर्यामिवाक्यतदर्थनिर्णायकब्रह्मसूत्रादिभिः श्रुत्यन्तरैश्च सोपबृंहणैः शिवचिच्छक्तेः ज्ञातृत्वव्यवस्थापनम् ।

**षष्ठे** ६.—ज्ञानरूपायाश्चिच्छक्तेर्ज्ञानवत्त्वरूपज्ञातृत्वमनुपपन्नम् । अतः ज्ञानरूपा चिच्छक्तिरन्या । ज्ञात्री च पार्वती देव्यन्या । इति शंकायां सप्रमाणयुक्तिकं तयोरेकत्वं चिच्छक्तेर्ज्ञातृत्वं चोपपाद्यते ।

**सप्तमे** ७.—शिवाश्रितत्वेन चिच्छक्तेः शिवं प्रति आयतनत्वं 'परमे व्योमन्' इति मंत्रवर्णोक्तं कथमिति शंकायां क्षित्याश्रितस्यापि पर्वतस्य क्षितिधरत्ववत् प्रमाणसिद्धत्वात् अत्यद्भुतत्वाच्च नानुपपत्तिलेशोऽपीति प्रतिपादनम् ।

**अष्टमनवमदशमश्लोकैः** ८.—१०—विकारिण्या आकाशशब्दितायाः शिवशक्तेरेव जगत्कारणत्वं स्वारसिकं नतु निर्विकारस्य साक्षाच्छिवस्येति 'आकाशो ह वै नामरूपयोर्निर्वहिते' त्यादि छान्दोग्यश्रुत्यर्थवर्णनम् ।

**एकादशे** ११ —'यदा तम' इत्यादिश्वेताश्वतरमंत्रस्य शिवतच्चिच्छक्त्योर्निर्विकारत्वसविकारित्वप्रतिपादनपूर्वकं शिवस्यापि विकारिभूतस्वचिच्छक्तिद्वारैव जगत्कारणत्वमित्यर्थपरत्वोपपादनम् ।

**द्वादश त्रयोदशयोः** १२. १३.—उक्तार्थ एव तत्रत्यमन्त्रान्तरप्रदर्शनपूर्वकं 'मायां तु प्रकृतिं विद्यात्' इत्यादिमन्त्रेण नारायणस्य शिवशक्त्यंशत्वं शिवस्य च तादृशशक्तिमत्त्वमिति शिवविष्ण्वोःश्रुतिषु जगत्कारणत्ववचनं सर्वमुक्तशक्तिमूलकमेवेत्यर्थःव्यवस्थाप्यत इति अनेकश्रुत्यन्तरोपबृंहणाद्यनुसारेण निरूपणम् ।

**चतुर्दशे** १४.—ब्रह्मणश्शिवस्य स्वापृथक्सिद्धकार्यावस्थाश्रयत्वमात्ररूपमुपादानत्वं परिणामित्वं तु शक्तिद्वारकमेवेत्यर्थपरत्वं प्रकृत्यधिकरणस्य ।

**पञ्चदशे** १५.—तदनन्यत्वाधिकरणोक्तमपरिणामिशिवानन्यत्वं प्रपञ्चस्य कथमिति शंकायामपृथक्सिद्धत्वरूपमेवानन्यत्वमिति तत्समाधानं तथा जन्मादिसूत्रतन्मूलश्रुतिभ्यामुक्तस्य जगत्कारणत्वलक्षणस्य शक्तिविशिष्टमेव ब्रह्मलक्ष्यं शक्तिरपि वेति नासंभवोऽतिव्याप्तिर्वेति च ।

**षोडशादिश्लोकपञ्चकेन** १६.—२०.—शक्तिविशिष्टश्शिव एव शास्त्रस्य विषय इति न तत्र शक्तिनिरूपणमसंगतमिति प्रतिपादनम् ।

**एकविंशाद्येकत्रिंशान्तैः श्लोकैः**—शक्तिविशिष्टः शिव एव परं ब्रह्मेति स्थितं शक्त्यंशभूतस्य विष्णोरपि ब्रह्मकोटिप्रवेशापत्तौ तस्य जीवत्वग्राहकानेकप्रमाणव्याकोप इति शंकानिरूपणम् ।

**तत्र एकविंशद्वाविंशाभ्याम्** २१. २२.—विष्णुपदस्य शतपथब्राह्मणादिश्रुतिभिः शिवपुराणादिवचनैश्च कर्मफलत्वनिरूपणम् ।

**त्रयोविंशचतुर्विंशाभ्याम्** २३. २४—मोक्षधर्मादिषु विष्णोर्ब्रह्मभावोक्तिः जगत्पालनरूपकार्यार्थतया तस्मिन्ब्रह्मांशाभिव्यक्तिविशेषमूलिकैव नान्यथेति सोपपत्तिकं निरूपणम् ।

क्तिविचारोऽपि तत्र सुसंगत इति भाष्ये तत्र तत्राधिकरणे शक्तिपरत्ववर्ण-
नमित्यवान्तरोपसंहारः ।

**चतुश्चत्वारिंशश्लोके** ४४.—तत्र सर्वलोकगत्याकाशदहराकाशवाक्ययो-
श्चिच्छक्तिपरत्वं तत्तदधिकरणे कण्ठत एवोक्तम् । तथा जन्मादिसूत्रे
'आकाशो ह वै नामरूपयो' रिति वाक्यस्यानन्दमयवाक्यस्य च तत्परत्वं
स्फुटमुक्तम् । तत्रोक्तन्यायेन तथाविधेषु वाक्यान्तरेष्वपि चिच्छक्तिपरत्व-
माचार्याणामुन्नेयमिति वर्णनम् ।

**ततः श्लोकद्वयेन** ४५ .४६.—शक्तिविशिष्टशिवज्ञानस्यैव श्रुतिषु मोक्षहेतुत्वो-
क्तेः शिवस्वरूपमिव शक्तिस्वरूपमपि मोक्षार्थे ब्रह्ममीमांसाशास्त्रे निरूपणी-
यम् । तथा परब्रह्मानन्दरूपशिवशक्तेरेव मुक्तभोग्यतया फलरूपत्वादपि
तन्निरूपणम् । तथा सर्वजगत्कारणत्वस्याद्वितीयत्वोपपादकस्यापरिणामिनि
शिवरूपे परिणामिशक्तिद्वारैवोपपादनीयत्वेन तदर्थतयापि तन्निरूपणमा-
वश्यकमिति ।

**ततः श्लोकद्वयेन** ४७. ४८.— निर्विशेषप्रत्यगभिन्नाद्वितीयब्रह्मसिद्धान्तरूपे
शुद्धाद्वैतवाद एव श्रुतिस्मृत्यादीनामिव ब्रह्मसूत्राणामपि परमं तात्पर्यमिति
अयमपि सिद्धान्तः श्रीकण्ठाचार्यैस्तत्र तत्रोद्घाटित एव न परित्यक्त इति
निरूपणम् ।

**अथ श्लोकत्रयेण** ४९—५१.— विशिष्य तत्तदधिकरणगतभाष्यवाक्यो-
दाहरणपूर्वकं शुद्धाद्वैतसिद्धान्तानुगुणस्य निर्गुणब्रह्मविदामुत्क्रान्त्याद्यभावस्य
जडानां ब्रह्मविवर्तवादस्य जीवब्रह्माभेदस्य चेत्यादेरर्थस्य स्फुटीकरणम् ।

**तदनु श्लोकद्वयेन** ५२. ५३.—निर्विशेषब्रह्मवादरूपपरमसिद्धान्ते श्रीभग-
वत्पादभाष्येण समत्वेऽपि भाष्यान्तरकरणमाचार्याणां सविशेषपरशिवस्वरूपे
भक्त्यतिशयसिद्ध्यर्थमुपनिषदामवान्तरतात्पर्यमादाय सूत्राणां तत्परत्व-
वर्णनार्थमिति ।

**अनन्तरश्लोकद्वयेन** ५४. ५५.— नन्वेवमपि महावाक्यस्य जीवब्रह्मणो-
श्शरीरिशरीरभावसंबन्धमूलकाभेदपरत्ववर्णनम् 'अंशो नानाव्यपदेशात्'
इत्यधिकरणे कृतं कथमुपपद्यतामिति शंकायामहंग्रहोपासने श्रवणादिषु
चानधिकृतानां मंदानां परंपरया मोक्षफलकं दासमार्गं प्ररोचयितुं तद्-

र्णनं कृतम् । इष्टं चाधिकारिभेदानुसारेण कल्पितमार्गनिरूपणमपि श्रुति-स्मृत्योरिति ।

**उपरितनश्लोकेन** ५६.— श्रीभगवत्पादाचार्यैरपि स्वभाष्ये ब्रह्मसूत्राणां निर्गुण इव सविशेषब्रह्मणि तात्पर्यं, सविशेषं च ब्रह्म पराशिवात्मकं, मुक्तस्य च सविशेषब्रह्मभावोऽस्तीत्याद्यर्थजातमाविष्कृतम् । आचार्यास्तु सूत्राणां सविशेषमात्रपरत्वमुपास्तिमार्गदार्ढ्यकृते निरूपयन्तः निर्विशेषं ब्रह्मतत्त्वं तत्र तत्र स्ववाक्यैर्व्यञ्जयामासुरितीयानेव भेद इति कथनम् ।

**ततः श्लोकद्वयेन** ५७. ५८.— रामानुजमध्वभाष्ययोरपि एवं प्रणाड्या शुद्धा-द्वैतसिद्धान्तपर्यवसायित्वमस्त्विति शङ्कायां तत्तद्भाष्योक्तिप्रदर्शनपूर्वकम-संभवनिरूपणम् ।

**अन्तिमश्लोकद्वयेन च** ५९. ६०.— श्रीकण्ठाचार्यभाष्यमपि नाद्वैतपर्यवसायि यतस्तत्र जीवब्रह्मणोर्मुक्तिदशायामपि नित्यश्शेषशेषिभावोऽनुवर्तत इति 'तस्य च नित्यत्वात्' इति सूत्रे प्रतिपादितमिति शङ्कायां तन्निराकरणपूर्वकं निष्प्रपञ्चप्रत्यगभिन्नपरमात्मरूपे महातात्पर्यमवान्तरतात्पर्यविषये च सवि-शेषे ब्रह्मणि दुर्वादिजनजल्पितकुकल्पनानवकाशीकरणेन तत्र शाङ्करभा-ष्यानधिगताङ्गाव्ययाद्यनेकगुणगणनीलकण्ठत्वादिविशिष्टमूर्तिविशेषपरमा-काशशब्दितोमाशक्तिकालकूटनिगरणादिलीलाविशेषतदुपासनप्रकारतत्फ-लीभूतपरविष्णुलोकान्तसकलभुवनातीतपरमानन्दमहाकैलासपदतत्प्रापका-तिवाहिकमार्गादिबहुविधविशेषांशप्रतिपादकत्वेनागतार्थत्वं च श्रीमदाचा-र्यभाष्यस्येति सर्वग्रन्थार्थोपसंहार इति परिपूर्णमखिलम् ॥

इत्थमत्यन्तसंक्षेपादानन्दलहरीगतान् ।
विषयानलिखं तेन विश्वेशः प्रीयतां शिवः ॥

---

॥ श्रीः ॥

॥ शिवाभ्यां नमः ॥

श्रीमदप्पयदीक्षितकृता

# ॥ आनन्दलहरी ॥

तत्प्रणीतया

## चन्द्रिकाख्यव्याख्यया सहिता ।

सोऽयं मदीयाशयरंगमध्ये सायन्नटस्ताण्डवमातनोतु ।
पादारविन्दाभरणे यदीये दधाति नीलोपलतां मुरारिः ॥ १ ॥

आनन्दलहरीं विद्यामस्माभिरनुसंहिताम् ।
व्याख्यास्यामो[1] वयं शैवीं व्याससूत्रानुसारिणीम् ॥ २ ॥

अस्ति तावदनतिशयानन्दरूपा शैवी चिच्छक्तिरखिलोपनिषत्तदुपबृंहणप्रसिद्धा । तत्प्रतिपादकानामुपनिषद्भागानां संभावितसकलशंकापरिहारद्वारा[2] तदुपपादकत्वोपपादनार्थमिदं प्रकरणमारब्धम् । अत्र तावत्तैत्तिरीयाणामुपनिषदि 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्याम्नाताया-मानन्दवल्ल्यामन्नमयादिक्रमेण 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर

१. 'स्यामि स्फुटीकर्तुं' इति ख पाठः । २. 'निरासेन' इति ख पाठः ।

आत्मानन्दमय' इत्यानन्दमयाम्नानस्य चिच्छक्तिप्रतिपादकत्वोपपादनं[1] क्रियते। तदनुबन्धेनैवान्येषामपि केषाञ्चिदुपनिषद्वाक्यानां तत्प्रतिपादकानामन्यपरत्वं निराकरिष्यते। तत्रायमाद्यः श्लोकः—

**सत्यज्ञानादिमन्त्रोदितमखिलमपि व्यावरीतुं प्रवृत्ता**
**कृत्स्नाप्यानन्दवल्लीत्यवगतमुपरि ग्रन्थतः सूत्रतश्च।**
**तस्मादानन्त्यविद्याफलगुहवदिह व्यावृतं[2] पारिशेष्यात्**
**व्योमापीत्येतदानन्दमय इति समालोचयामो गुहास्थम्॥ १॥**

अस्यानन्दमयवाक्यस्य विवरणार्थं ब्रह्ममीमांसायाम् 'आनन्दमयोऽभ्यासा' (ब्र. अ. १. पा. १. सू. १३.) दित्यधिकरणं प्रवृत्तम्। अस्य तावत् पूर्वपक्षे सिद्धान्ते च आनन्दमयो जीवस्तत्पुच्छत्वेनोक्तं तत्प्रतिष्ठारूपं ब्रह्मेति समानं, किं त्वानन्दमयोपासनापरेयमानन्दवल्लीति पूर्वपक्षः। तत्प्रतिष्ठारूपज्ञेयब्रह्मप्रतिपत्तिपरेत्यद्वैतवादिभिरुक्तः[3] सिद्धान्तः। आनन्दमयो ब्रह्म तत्प्रतिष्ठारूपं ब्रह्मापि परिपूर्णानन्दरूपं ब्रह्मैव। अनन्यप्रतिष्ठत्वज्ञापनाय[4] स्वस्य स्वप्रतिष्ठत्वोक्तिरिति विशिष्टाद्वैतवादिभिर्ष्णैववैरुक्तम्। श्रीकण्ठाचार्यैरेव[5] आनन्दमयो ब्रह्मतत्प्रतिष्ठारूप इति स पन्था दर्शितः। किं च भेदे पुच्छपुच्छवद्भावनिर्देशो[6] न सामञ्जस्यमश्नुते। 'स्वे महिम्नि प्रतिष्ठित' इत्यादिवत् स्वशब्दादिकं विहायानन्दम-

---

१. 'तत्प्रतिपादकत्वोपपादनं करिष्यते।' इति **ख** पाठः। २. 'व्यावरीतव्यमेव' इति **ख** पाठः। ३. 'प्रतिपत्तिरेवेति सिद्धान्त इत्यद्वैतवादिभिरुक्तम्।' इति **ख** पाठः। ४. 'प्रतिष्ठत्वव्यवस्थापनाय' इति **ग** पाठः। ५. श्रीकण्ठाचार्यैस्तु ब्रह्मैवानन्दमय ...... दर्शितः, इति **क** पाठः। ६. पुच्छपुच्छिवद्भेदेन' इति **ग** पाठः।

यस्य ‘ब्रह्म प्रतिष्ठा’ इति शब्दभेदेनाधाराधेययोः श्रुत्या ग्रहणात् स्वप्र-[1]तिष्ठत्वोक्तिरित्यपि न स्फुटं प्रतीयत इत्यभिप्रेत्य पुच्छवाक्ये ब्रह्मशब्दः प्रणवपर इति प्रतिपादितम् । तदनन्तरं ‘अत्र केचित्’ इत्यादिग्रन्थेनानन्दमयश्चिच्छक्तिः तत्प्रतिष्ठा शिवाख्यं परं ब्रह्मेति स्वाभिप्रायो दर्शितः । तद्व्याख्याने शिवादित्यमणिदीपिकायामानन्दमयो जीव इति पूर्वपक्षनिरासेन चिच्छक्तिरिति सिद्धान्तव्यवस्थापनार्थतया तदधिकरणयोजनाप्रकारः प्रपञ्चेन दर्शितोऽस्माभिः । इहानन्दमयश्चिच्छक्तिरिति ब्रह्मपक्षेऽनुपपत्त्युद्घाटनेन चिच्छक्तिपक्षेऽनुपपत्तिनिरासेन च व्यवस्थाप्यतेऽनेन । अस्य श्लोकस्यायमर्थः । ‘ब्रह्मविदाप्नोति परम्’ इत्यानन्दवल्ल्यां प्रतिपाद्यस्य कृत्स्नस्याप्यर्थस्य संग्राहकं सूत्रम् । तत्र किं तत् ब्रह्म कथं च तद्वेदनं किञ्च तद्वेदनप्राप्यं परमुत्कृष्टं फलमित्याकांक्षायां तत्त्रितयं स्पष्टीकर्तुं ‘तदेषाभ्युक्ता’ इति ब्राह्मणस्योक्तार्थप्रतिपादकत्वेनावतारणपुरस्सरं तदनुव्याख्यानरूपः ‘सत्यं ज्ञानम्’ इत्यादिमन्त्र आम्नातः । तत्रापि कथं ब्रह्मणः त्रिविधपरिच्छेदराहित्यरूपमानन्त्यमित्याकांक्षायां तदानन्त्याद्युपपादनार्थः कृत्स्नोऽप्यनुवाकशेष इति ‘तस्माद्वा एतस्मादात्मन आकाशस्संभूत’ इत्याद्युत्तरसन्दर्भपर्यालोचनया ‘मान्त्रवर्णिकमेव च गीयत’ इति (ब्र. अ. १ पा. १. सू. १६.) ब्रह्मसूत्रपर्यालोचनया च ‘यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ । तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय’ इत्यभियुक्तोक्त्या चावगतम् । ततश्च कथं ब्रह्मणस्त्रिविधपरिच्छेदराहित्यरूपमानन्त्यं तस्य हि नित्यत्वेन विभुत्वेन कालतो देशतश्च परिच्छेदराहित्येऽपि वस्त्वन्तरव्यावृत्तत्वाद्वस्तुपरिच्छेदराहित्यं न संभवतीत्याशंकायां तदुपपादनार्थं

---

१. ‘स्वप्रतिष्ठत्वोक्तिरपि न संप्रतीयत’ इति ख पाठः ।

'तस्माद्वा एतस्मादात्मन' इत्यादि 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादि च कारणवाक्यम् । तेन द्विविधेनापि कारणवाक्येन चेतनाचेतनात्मकसकलप्रपञ्चोपादाननिमित्तभूतं स्वापृथक्सिद्धसकलप्रपञ्चविशिष्टं ब्रह्मैकमेव यथा पत्रपुष्पफलादीनामान्तर्गणिकभेदसत्त्वेऽपि तद्विशिष्टो वृक्ष एक इति । एवं ब्रह्मणः स्वपृथक्सिद्धवस्त्वन्तराभावेन तथाभूतवस्तुपरिच्छेदराहित्यं लभ्यते । यथा च कस्यां गुहायां ब्रह्मेत्यज्ञानाज्जिज्ञासायां 'उपह्वरे गिरीणां संगमे च नदीनां धिया विप्रो अजायत' इति मन्त्रे गिरिगह्वरे विप्रस्य ब्रह्मविद्याजननोक्तेः गिरिगुहा विवक्षितेति भ्रान्तिप्रसक्तावन्नमयादिका गुहेति तद्विवरणार्थमन्नमयादिकोशनिरूपणं, यथा चोष्ट्रकोकिलादिजातिभेदेन ग्रीष्महेमन्तादिकालभेदेन च भोग्यानां सर्वेषां कामानां कथं युगपद्भोग इति शंकायां तदुपपादनार्थं 'सैषानन्दस्य मीमांसा' इत्यादि । तेन ब्रह्मानन्दस्यैव सकलवैषयिकसुखात्मना विद्यमानतोक्त्या 'सर्वान् कामान्' इत्यनेन सर्वकामात्मना विद्यमानस्स एवोच्यत इति विवरणेन तदुपपादनं कृतं भवति । यद्यपि वैषयिकसुखानां सर्वेषां मिलितानामपि अखण्डब्रह्मानन्दलेशरूपत्वात् ब्रह्मानन्दानुभवो युगपत् सर्ववैषयिकसुखासेरत्यन्तमतिरिच्यते, तथापि मुक्तं प्रति सर्वात्मनाभिव्यक्ते ब्रह्मानन्देऽनुभूयमाने वैषयिकसुखात्मना विद्यमानास्तदंशास्सर्वेऽप्यनुभूयन्त एवेति तस्य युपगत् सर्वकामावाप्तिविवरणरूपतोपपत्तिः । यथैवमानन्त्यादिकं विवृतमेवं गुहान्तर्वर्तिप्रसिद्धव्योमाविलक्षणं किं तत् परमं व्योमेत्याकांक्षायां तदपि विवरणीयम् । अतस्तद्विवरणार्थमानन्दमयवाक्यमित्येवं परिशेषादानन्दमयः पुराणादिषु परमाकाशशब्देन प्रसिद्धा शैवी चिच्छक्तिरवसीयत इति ॥ १ ॥

अथ परिशेषप्रमाणोपोद्बलकं प्रमाणान्तरमाह—

**को ह्येवान्यात्क इत्याद्युपरिपठनमप्युक्तमर्थं व्यनक्ति**
**प्राचुर्यं प्राक्तदर्थे फणितमुदितमानन्दमीमांसयाग्रे ।**
**एवं चाग्रानुसारान्मयडवधि पदं तत्प्रकृत्यर्थमात्रे**
**[1]द्व्यर्थे हि व्याकृतं तत्प्रकृतवचन इत्यादि सूत्रं महर्षेः ॥ २ ॥**

उत्तरसन्दर्भे 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इत्यानन्दशब्दस्य प्रकृतानन्दमयविषयस्य व्योमशब्दपर्यायाकाशशब्दसामानाधिकरण्यं दृश्यते । तेनाप्यानन्दमयस्य परमाकाशशब्दितचिच्छक्तिरूपतावसीयत इत्यर्थः । नन्वानन्दमये मयडर्थाधिक्यात् तद्विषयत्वमस्यानन्दशब्दस्य न युक्तमित्याशंक्याह—**प्राचुर्यमिति** । मयडर्थो हि प्राचुर्यं तदस्यानन्दस्य 'सैषानन्दस्य मीमांसे' त्यारभ्य प्रवृत्तया 'ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्द' इत्यानन्दमीमांसया स्फुटीक्रियते । अतो नार्थभेदः प्रसज्यत इत्यर्थः । ननु 'अन्नमयो यज्ञ' इत्यादिरीत्या [2]प्राचुर्येणानन्दोऽस्मिन्नित्यानन्दमयशब्दः आनन्दधर्मिविषयः, 'यदेष आकाश अनन्द' इत्यादिस्तु सन्दर्भः आनन्दमात्रविषय इत्यर्थभेदो न निवार्यत इत्याशंक्याह— **एवञ्चेति** । 'तत्प्रकृतवचने मय' डिति प्राचुर्यविषये मयड्विधायकं पाणिनिसूत्रमिदं वृत्तिकारादिभिर्द्वेधा व्याख्यातम् । तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमित्यर्थे वर्त्तमानात् स्वार्थे मयट्प्रत्ययो भवतीत्येकोऽर्थः। तस्य 'अन्नमयं यवागूमयी' इत्याद्युदाहरणम् । प्राचुर्येण

१. 'द्व्यर्थं तत्' इति ख पाठः । २. 'प्रस्तुत आनन्दोऽस्मिन्' इति ख पाठः ।

प्रस्तुतमन्नं प्राचुर्येण प्रस्तुता यवागूरित्यादिस्तदर्थः। यद्यपि प्रकृतशब्दः प्रस्तुतमात्रवाची न तु प्राचुर्यविशिष्टप्रस्तुतवाची। तथापि प्रकृत इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लभ्यते। वचनग्रहणं हि लोके यादृशस्य प्रकृतस्य मयटा प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम्। लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धमिति। अपरस्त्वर्थः, प्रकृतं प्रस्तुतमुच्यतेऽस्मिन्निति प्रकृतवचनम्। तदिति प्रथमासमर्थात् प्रकृतवचनेऽर्थे मयट्प्रत्ययो भवतीति। अस्य च 'अन्नमयो यज्ञ' इत्याद्युदाहरणम्। प्रकृतमन्नमस्मिन् यज्ञ इत्यादिस्तदर्थः। अस्मिन्नर्थे प्रकृत्यर्थादर्थान्तरे प्रत्यय इति। एवञ्चात्र 'यदेष आकाश आनन्द' इत्यादिवाक्यशेषानुसारेणात्र मयडन्तपदस्य प्रथमार्थः परिग्राह्य इत्यर्थः॥ २॥

नन्वानन्दमयशब्दो यदि प्रचुरानन्दमेव ब्रवीति न तु तद्धर्मिणमपि तदा कस्यायमानन्द इति बोद्धव्यमिति शंकामुद्भाव्य 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मसन्निधानात् 'तस्य प्रियमेव शिर' इत्यत्र श्रुतस्य तस्येतिशब्दस्य पुच्छशब्देनेव प्रतिष्ठाशब्देनापि अनुषंगेणान्वयादानंदमीमांसायां 'स एको ब्रह्मण अनन्द' इति साक्षादेव ब्रह्मान्वयश्रवणात् 'सोऽश्नुते सर्वान् कामान् सह' इति मुक्तस्य यौगपद्येन सर्वकामावाप्तिवाक्यस्य सकलवैषयिकसुखकणिकामहासमुद्रायमाननिरतिशयानन्दानुभवपरस्य सह ब्रह्मणा विपश्चितेति वाक्यशेषानुसारेण 'स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य' इति वाक्योक्तार्थप्रतिपादकत्वाच्च ब्रह्मण इति बोद्धव्यमिति प्रतिपादयति—

**कस्यानन्दोऽयमानन्दमय इति यदि ब्रह्मणस्सन्निधाना-**
**त्तस्य ब्रह्म प्रतिष्ठेति च तदनुगुणात्तस्य शब्दानुषंगात्।**

**ब्रह्मानन्दो य इत्याद्युपरि शतगुणोत्कर्षवाक्येऽभिधाना-**
**त्तेनैक्याच्चार्थगत्या सहफणितियुजस्सर्वकामाप्तिवाचः ॥ ३ ॥**

एवमानन्दमयाश्चिच्छक्तिरिति पक्षे उपपत्तिः प्रदर्शिता । अथ ब्रह्मेति पक्षे अनुपपत्तिप्रदर्शनपूर्वकं चिच्छक्तिपक्षेऽनुपपत्तिनिरासः क्रियते—

**एवं सत्येव तस्यैष इति सुघटितात् स्यात्तदात्मान्तरोक्तिः**
**भेदोक्तिः पुच्छपुच्छाद्यवयवविधया ब्रह्मणस्तस्य चान्या ।**
**एतस्मादात्मनोऽन्यत्सकलमभवदित्युक्तिरत्रोपपन्ना**
**छान्दोग्ये कारणत्वं श्रुतमिह बृहदारण्यके देवतात्वम् ॥ ४ ॥**

प्राणमयादिपर्यायचतुष्टयेऽपि 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' इति प्रतिपर्यायं श्रूयते । तस्य प्राणमयस्यैष आत्मा यः पूर्वस्यान्नमयस्येत्यादिस्तत्रतत्र पर्याये तस्य वाक्यस्यार्थः । एवञ्चानन्द-मयपर्याये तस्यानन्दमयस्यैष आत्मा यः पूर्वस्य विज्ञानमयस्येत्यर्थः पर्यवस्यति । एवमानन्दमयं प्रत्यात्मान्तरोक्तिरानन्दमयश्चिच्छक्तिरिति पक्ष एव युज्यते । न तु ब्रह्मेति पक्षे । तस्मिन् पक्षे प्राणमयादिपर्या-येषु तस्य वाक्यस्यात्मान्तरप्रतिपादकत्वमानन्दमयपर्याये तस्य स एवात्मेत्यनन्यात्मप्रतिपादकत्वमिति वैरूप्यं स्यात् । अपिचानन्दमयस्य ब्रह्म पुच्छमिति श्रूयते । तत् ब्रह्म न प्रणवः । 'असन्नेव स भवति' इत्यन-न्तरश्लोके तदसत्त्वं मन्यमानस्य निन्दाश्रवणात् प्रणवस्य प्रत्यक्षासिद्ध-त्वेन तस्यासत्त्वशंकानास्पदत्वात् । न च पूर्वपर्यायश्लोकानां पुच्छवद्विष-यत्वादयं श्लोकः पुच्छवदानन्दमयविषयो न तु पुच्छब्रह्मविषय इति

शंकनीयम्। श्लोकगतब्रह्मश्रुतिभ्यां प्रायपाठबाधात् 'अन्नाद्वै प्रजाः प्रजायन्ते' 'यतो वाचो निवर्तन्त' इति श्लोकयोः अन्नमयमनोमयविषयत्वाभावेन प्रायपाठासिद्धेश्च। एवञ्च पुच्छवदानन्दमयोऽपि चेत् ब्रह्म, तदा तस्यैव तत्पुच्छत्वनिर्देशोऽसमञ्जसः स्यात्। न चान्नमयपर्याये 'तस्येदमेव शिर' इत्यादिना स्वस्मादनतिरिक्तैः स्वावयवैः शिरःपक्षपुच्छादिमत्त्वकल्पना तदा दृष्टेति वाच्यम्। तत्रावयवावयविभावौपाधिकसंस्थानविशेषकृतभेदसद्भावादिहानन्दमयस्य ब्रह्मत्वे तन्मात्ररूपस्यापि षष्ठ्यालंबनस्य भेदस्याभावात्। एतेन स्वस्मादनतिरिक्तेष्वेव शिरःपक्षादिरूपणपरमिदं प्रकरणमिति कल्पना सुदूरमपास्ता। 'अथर्वांगिरसः पुच्छं प्रतिष्ठे' त्यादौ तदसिद्धेश्चेति भावः। अथोत्तरार्धेन चिच्छक्तिपक्षे अनुपपत्तिनिरासः क्रियते। एवमिह शंकोत्तिष्ठति। आनन्दमयादिपर्यायपञ्चकात् प्राक् 'तस्माद्वा एतस्मादात्मन' इत्यादिनोपक्रान्तं जगत्कारणत्वं यथान्नमयादिकमतिक्रामति तथा नानन्दमयमतिक्रामति। नापि तत्प्रतिष्ठारूपे ब्रह्मण्यन्वेति। किं त्वानन्दमय एवान्वेति। कुतः। तदनन्तरं 'सोऽकामयत' इत्यादिना प्रागुपक्षिप्तजगत्कारणत्वप्रपञ्चने स इति पुल्लिङ्गेनानन्दमयपरामर्शात्। न च ब्रह्मण्यपि 'तस्यैष एव शारीर आत्मा' इति वाक्ये पुल्लिङ्गस्यात्मशब्दस्य श्रवणात्तदपेक्षया पुल्लिंगमुपपद्यत इति वाच्यम्। 'तस्यैष' इति वाक्यस्य सर्वपर्यायसाधारणत्वात् प्रकृतपरामर्शिना सर्वनाम्ना असाधारण्येन प्रकृतसमर्पकं यत् प्रधानपदं तदीयलिंगापेक्षणस्यैवोचितत्वात्। अपि चोत्तरानुवाके भृगुवल्ल्यां 'यतो वा इमानि भूतानि जायन्ते' इत्यादिनोपक्षिप्तस्य जगत्कारणत्वस्यान्नप्राणादिपर्यायचतुष्टयातिलंघनेन पञ्चमपर्यायाम्नात आनन्द एव 'आनन्दाद्ध्येव खल्विमानि भूतानि जा-

यन्त' इत्यादिना श्रुत्यैवान्वयप्रदर्शनादिहापि पञ्चमपर्यायसाम्येन स्थानप्रमाणादानन्दमय एव जगत्कारणत्वान्वयोऽवसीयते। तस्मादेव स्थानप्रमाणात् भृगुवल्ल्युक्त आनन्दः आनन्दवल्ल्युक्त आनन्दमय एवेत्यप्यवसीयते। अतः कारणत्वान्वयादानन्दमयो ब्रह्मेति युक्तम्। सद्विद्यादिषु ब्रह्मणः कारणत्वप्रसिद्धेः जन्मादिसूत्रे तन्मूलश्रुतौ च कारणत्वस्य ब्रह्मलक्षणत्वोक्तेः प्रकृत्यधिकरणे च ब्रह्मणो जगदुभयकारणत्वव्यवस्थापनाच्च। तस्माद्वल्लीद्वयस्यैकार्थ्यादानन्दवल्ल्युक्त आनन्दमयो भृगुवल्ल्युक्त आनन्दश्च ब्रह्मेत्येवांगीकर्तुं युक्तम्। अत एव खलु भृगुवल्ल्यामानन्दमयवृत्तेरानन्दशब्दस्य 'आनन्दो ब्रह्मेति व्यजानात्' इति ब्रह्मपदसामानाधिकरण्यं दृश्यते। न चानन्दवल्ल्यां 'स एको ब्रह्मण आनन्दः' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिनास्यानन्दस्य ब्रह्मव्यतिरेकश्रवणात् 'सोऽकामयत' इति सर्वनाम्ना परामृष्टमानन्दमयमेव 'रसो वै सः।' 'एष ह्येवानन्दयाति।' यदेष आकाश आनन्द' इति सर्वनामभिः परामृश्य कीदृशं तस्यानन्दमयशब्दितस्यानन्दस्य प्राचुर्यमित्याकांक्षायां तन्निरतिशयत्वरूपमिति निर्णेतुमानन्दमीमांसां प्रस्तुत्य, ततः 'स एको ब्रह्मण आनन्द' इत्यादिना तस्यैव ब्रह्मधर्मत्वप्रतिपादनेनायमानन्दमय आनन्दमयात् ब्रह्मणोऽन्यस्तदीयानन्द इति योजयितुं शक्यत्वात् प्रथमश्रुतभेदव्यपदेशानुसारेणाभेदव्यपदेशो गौणः स्यादिति वाच्यम्। श्रुतिसूत्रसिद्धब्रह्मलक्षणनिर्वाहार्थमभेदव्यपदेशस्यानुरोध्यत्वेन प्रथमश्रुतस्यापि भेदव्यपदेशस्यैव 'राहोश्शिर' इतिवदौपचारिकत्वेन नेयत्वादिति। इयं चिच्छक्तिपक्षे कारणत्वान्वयानुपपत्तिस्तावदेका। 'आत्मन आकाश' इत्यादिश्रुतावात्मशब्दान्वयानुपपत्तिरपरा। आत्मशब्दो हि ज्ञातृवाची। न च धर्मज्ञानरूपायाश्चिच्छक्तेः

ज्ञातृत्वं संभवतीतीयमाशङ्कोत्तरार्धेन निरस्यते। तन्निरासप्रकारस्त्वयम्—छान्दोग्ये 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इत्याकाशसंज्ञितायाश्चिच्छक्तेस्सर्वभूतकारणत्वं श्रुतम्। न चात्राकाशशब्दो भूताकाशपरस्तद्देवतापरो वा। तयोस्सर्वभूतकारणत्वाभावात्। नापि ब्रह्मपरः। वेदे प्रयुक्तस्य कस्यचित् शब्दस्य लोकप्रसिद्धार्थग्रहणासंभवे हि वेदतदुपबृह्मणयोरन्यत्र यस्मिन् प्रयोगो दृष्टस्तस्य ग्रहणं युक्तम्। वेदे चान्यत्र 'आकाशशरीरं ब्रह्म' 'यदेष आकाश आनन्दो न स्यात्' इत्यादौ ब्रह्मणश्शरीरानन्दादिरूपायां शक्तौ प्रयोगो दृष्टः। वेदोपबृह्मणे च श्रीकूर्मपुराणे 'यस्य सा परमा देवी शक्तिराकाशसंज्ञिता। अनन्तैश्वर्ययोगात्मा महेशो दृश्यते किल॥' इति तस्या आकाशशब्दवाच्यत्वमुक्तम्। अतश्छान्दोग्ये तस्याः कारणत्वं श्रुतमिति युक्तमेव। तथा बृहदारण्यके 'यदिदं सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्च' इति 'वायौ गार्गि' इत्यादि गार्गियाज्ञवल्क्यप्रश्नोत्तरपरम्परया पृथिवीसलिलवाय्वन्तरिक्षलोकादिपरब्रह्मलोकान्तानां लोकानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्ववर्णनानन्तरं 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च' इति पृष्टेन याज्ञवल्क्येन परब्रह्मलोकस्योतप्रोतत्वं परब्रह्मशक्तौ वर्णनीयम्। सा परतत्त्वभूता गुरूपसदनादिशिष्यकृत्यमर्यादामतिक्रम्य न प्रष्टव्येति तत्प्रश्ननिवारणार्थं 'गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि मातिप्राक्षीः' इति वाक्ये तस्यामात्मत्वान्तरविशेषधर्मरूपं देवतात्वं श्रुतम्। न च तद्देवतात्वश्रवणं परमेश्वरविषयमिति शङ्कनीयम्। तदानीं निवारितस्य परब्रह्मलोकान्तर्सर्वलोकोतत्वप्रोतत्व-

१. 'सकलजगदाधारप्रश्नस्य' इति ख पाठः।

प्रश्नस्य 'यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावा-पृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्च' इति पुनरवतारणे सति 'आकाश एव तदोतं च प्रोतं च' इति तदुत्तरवाक्ये चिदम्बरशक्तिविषयाकाशशब्दश्रवणात् तदनन्तरं 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति प्रश्नान्तरस्योत्तरेण 'एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इत्यादिना 'एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' इत्यन्तेन सन्दर्भेण तस्याकाशस्याक्षरशब्दोदितपरब्रह्माश्रित-त्वप्रतिपादनाच्च । तस्माच्चिदंबरशक्तावात्मत्वस्य कारणत्वस्य चान्वये न काचिदनुपपत्तिरिति ॥ ४ ॥

अथ श्रुत्यन्तरोदाहरणेनापि ब्रह्मचिच्छक्तेर्ज्ञातृत्वमुपपादयति—

**तस्मिन्विज्ञानमन्तर्यमयितृविषये ब्राह्मणे तन्नियम्यं**
**प्रोक्तं तत्तां स एवार्हति न तदितरा तस्य भाः काचिदेष्या[1] ।**
**तस्मिन्माध्यन्दिनास्तद्विषयगतमनुश्रावयन्त्यात्मशब्दं**
**शक्तिर्ज्ञानक्रियात्मा बलमिति विविधा श्रूयते सेति चान्ये ॥५॥**

तस्मिन्नेव बृहदारण्यके अन्तर्यामिब्राह्मणे पृथिव्यादिक्रमेण ब्रह्मणस्सर्वप्रपञ्चान्तर्यामित्वनिरूपणप्रस्तावे 'यो विज्ञाने तिष्ठन्विज्ञा-नादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष आत्मापहतपाप्मान्तर्याम्यमृत' इति तेनान्तर्यामिणा नियम्यं विज्ञानं किञ्चित् काण्वाः पठन्ति, तद्विज्ञानं कस्येत्याकांक्षायां सन्निधा-नात्तस्यैवान्तर्यामिणः परब्रह्मण इति युक्तम् । तस्य हि सर्वावभास-

---

१. '**तदितरस्तस्य भासावभास्यः** ।' इति क पाठः ।

कतया नित्यं सर्वव्यापकञ्च विज्ञानं 'तस्य भासा सर्वमिदं विभाति' इति श्रुत्यन्तरप्रसिद्धम्। तथाभूतब्रह्मविज्ञानञ्च ब्रह्मासाधारणधर्मत्वेनानेकश्रुतिप्रसिद्धः प्रसिद्धाकाशविलक्षणः परमाकाश इत्येवांगीकर्त्तुमुचितम्। आकाशो विज्ञानं चेति ब्रह्मणि पृथग्धर्मद्वयांगीकारे गौरवात्तदीयविज्ञाने नित्यविभुत्वेन प्रसिद्धाकाशसादृश्येन 'असमन्तात् काशत' इति योगेन च आकाशशब्दस्य वृत्त्युपपत्तेश्च। तस्मिन् बृहदारण्यके समानप्रकरणे 'य आत्मनि तिष्ठन्नात्मनोऽन्तर' इत्यादि माध्यन्दिनाः पठन्ति। अत्र पर्यायैक्यात् स्थानप्रमाणेन विज्ञानात्मशब्दयोरेकार्थत्वं वाच्यमिति ब्रह्मचिच्छक्तेरात्मत्वसिद्धिः। यद्यपि विज्ञानशब्दस्य भावल्युडन्ततया नन्द्यादिल्युट्प्रत्ययान्ततया वा भावकर्मकरणाधिकरणकर्तृरूपानेकार्थत्वं संभवति, तथापि घटपटादियत्किञ्चिद्विषयावच्छिन्नायां ज्ञप्तौ ज्ञानशब्दस्य लोके प्रयोगात् उत्सर्गतस्तस्य तादर्थ्यमेव ग्राह्यम्। अत एव वेदवाक्येषु जीवे दृष्टस्य ज्ञानशब्दस्य नन्द्यादिल्युट्प्रत्ययान्ततया ज्ञातृपरत्वेन वा स्वप्रकाशतया ज्ञप्तिरूपतापि जीवस्यास्तीति तदर्थकत्वेन वा निर्वाहसंभवेऽपि 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति (ब्र. २. पा. ३. सू. २९.) ब्रह्मसूत्रे ज्ञानमिच्छादिसकलव्यवहारहेतुतया प्राचुर्येण सदानुवर्त्तमानो जीवस्य सारभूतो गुण इति तद्व्यपदेशशब्देनास्यौपचारिको व्यपदेशः, यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु ब्रह्मणस्तेन व्यपदेश इति निर्वाहः कृतः। यत्तु 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इति तदनन्तर (ब्र. २. पा. ३. सू. ३०.) सूत्रेण ज्ञानस्य यावद्द्रव्यभाविधर्मत्वात् तद्व्य-

---

१. 'तस्मिन्नेव विज्ञानपर्याये' इति ख पाठः। २. 'प्रसिद्धयतिशयात्' इति ख पाठः।

क्तिपर्यन्ततायां न दोषः, गोत्वादिवाचिनां गवादिशब्दानां व्यक्तिपर्यन्तत्वदर्शनादिति तत्र निर्वाहान्तरमुक्तम्। तदभ्युच्चयमात्रम्। 'शुक्लमधुरञ्जलं' इत्यादिवत् 'अहं ज्ञानम्' इति कदाचिदपि लोके व्यवहारस्यादर्शनेन रूपरसगोत्वादिशब्दानामिव ज्ञानशब्दस्यापि निष्कृष्टधर्मवाचित्वावगमात् नीलादिशब्दानां यावद्द्रव्यधर्मवाचित्वेऽपि द्रव्यपर्यन्तत्वस्य गोत्वादिशब्दानां यावद्द्रव्यभाविधर्मवाचित्वेऽपि तदभावस्य च दर्शनेन यावदात्मभावित्वस्यासाधकत्वाच्च। एवमुक्तरीत्या यदा केवलस्य ज्ञानशब्दस्यैव विषयान्तरावच्छिन्नज्ञप्तावौत्सर्गिकत्वं तदा तत् सुतरां विज्ञानशब्दस्य व्युपसर्गेण विविधत्वप्रतीतेः 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति न्यायेन विज्ञाने विविधत्वस्य नानाविषयत्वरूपतापर्यवसायित्वात्। एवञ्चात्र काण्वशाखायां विज्ञानशब्देन विविधविषयावच्छिन्नज्ञानरूपतयावगतस्यैव कस्य चित् परमेश्वरनियम्यस्य माध्यन्दिनशाखायामात्मशब्देन ज्ञातृरूपतोक्तेत्यतोऽपि तत्पारमेश्वरी चिच्छक्तिरिति पर्यवस्यति। जीवचिच्छक्तीनां[1] ज्ञातृत्वाभावात् परमेश्वरस्य नियम्यत्वासंभवाच्च तदीयचिच्छक्तेर्ज्ञातृज्ञानोभयरूपत्वस्य पुराणागमेषु च बहुषु प्रसिद्धत्वाच्च 'ब्रह्मणा विपश्चिता' इति श्रुतौ ब्रह्मणि विपश्चित्त्वविशेषणेन विशिष्य तस्या विविधविषयदृष्टिरूपत्वस्य प्रसिद्धत्वाच्च। ननु 'यो विज्ञाने तिष्ठन्य आत्मनि तिष्ठन्' इति पर्यायो जीवविषय इति युक्तम्। अन्तर्याम्यधिकरणे जीवोऽन्तर्यामीति पूर्वपक्षनिराकरणार्थतया प्रवृत्तेन 'उभयेऽपि हि भेदेनैनमधीयत' इति (ब्र. १. पा. २. सू. २१.) सूत्रेणोभये काण्वमाध्यन्दिनाश्चैनमन्तर्यामिणं 'यो विज्ञाने तिष्ठन्य आत्मनि तिष्ठन्' इति जीवात् भेदे-

१. 'चिच्छक्तीनां जीवानां विविधविषयज्ञानत्वाभावात्' इति ग पाठः

नाधीयते। अतो न जीवोऽन्तर्यामी नियम्यस्य नियामकत्वायोगादिति तस्य पर्यायस्य जीवविषयत्वस्पुटीकरणात्। आत्मशब्दस्य जीवे स्वारस्यात् विज्ञानशब्दस्यापि 'विज्ञानं यज्ञं तनुत' इत्यादिषु श्रुतिषु तत्र तत्र दृष्टप्रयोगत्वाच्चेति चेदुच्यते जीवपूर्वपक्षनिराकरणार्थत्वं तस्य सूत्रस्य न युक्तम्। तथा पूर्वपक्षासंभवात्। तथाहि—कः खलु जीवोऽन्तर्यामीति पूर्वपक्षः स्यात्?। न तावत्तदुपासकजीवः। परिच्छिन्ने तत्र पृथिव्यादिस्थितितन्नियन्तृत्वयोरसंभवात् 'किमन्तर्यामिणं वेत्थ' इति गन्धर्वेण पृष्टस्य काप्यस्य 'नाहं तं भगवन्वेद' इत्युत्तरासामञ्जस्यप्रयोगाच्च। यज्ञविद्याविदः काप्यस्य कर्मफलभोक्तृदेहातिरिक्तजीवज्ञानावश्यम्भावात्। नापि पृथिव्याद्यभिमानी जीवः। श्रोतारमुद्दालकं प्रति पराभूते तस्मिन् 'एष त आत्मा' इति तदात्मत्वोपदेशायोगात् पृथिव्यादिष्वप्यभिमानिजीवस्य प्रत्येकं भिन्नतया 'सर्वाणि भूतानि योऽन्तरो यमयति' इत्युपक्रान्ताया एतस्य सर्वनियन्तृताया अनन्वयप्रसङ्गाच्च। नापि जीवसमुदायः। तस्य पृथिव्यादिस्थत्वतन्नियन्तृत्वयोरभावेन 'यः पृथिव्यां तिष्ठन्' इत्यादेरनन्वयात्। न च सर्वभूतवाक्ये जीवसमुदायः पृथिव्यादिवाक्ये तत्तदभिमानी जीव इति वैरूप्यकल्पनं युक्तम्। न वा तदपि निर्वोढुं शक्यम्। 'एष आत्मा' इत्युपदेशायोगस्य उक्तत्वात्। अपि चोपासको जीव इति पृथिव्याद्यभिमानी जीव इति सर्वजीवसमुदाय इति पक्षत्रयमपि 'भेदव्यपदेशाच्चान्य' इत्यनेनान्तरादित्यविद्याधिकरणगुणसूत्रेणैव निरस्तम्। तेन हि सूत्रेणादित्यान्तर्वर्ती हिरण्मयः पुरुषो जीव इति पूर्वपक्षनिराकरणे हेतुरुक्तः 'य आदित्ये तिष्ठन्नादित्यादन्तर' इत्यादिभेदव्यपदेशादादित्यजीवादन्योऽयमादित्यान्तर्वर्ती हिरण्मयः पुरुष इति स हेतुरुपासकजीवोऽन्तर्यामीत्यादिपक्षत्र-

यनिराकरणेऽपि तुल्यः । 'एष आत्मा यं पृथिवी न वेद यं सर्वाणि भूतानि न विदुः' इत्यादिभेदव्यपदेशसत्त्वात् । तस्मान्निरालंबनो जीवपूर्वपक्ष इति न तन्निराकरणार्थमिदं सूत्रं, किन्तु 'न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च' इति (ब्र. अ. १. पा. २.) सूत्रेण शारीरो नारायणो नान्तर्यामीति प्रतिपादिते तर्हि नारायणस्यापि प्रकृतिभूता शैवी चिच्छक्तिरन्तर्यामिण्यस्त्विति शंकायां तन्निराकरणार्थम् । नारायणोऽप्यन्तर्यामी भवितुमर्हतीत्युक्त्यनन्तरं तर्हि यः कश्चित् प्राकृतजीवोऽन्तर्याम्यस्त्विति शंकानुत्थानात् । भाष्यं तु जीवपूर्वपक्षनिराकारणार्थत्वेनापि सूत्रं योजयितुं शक्यमित्येवंपरम् । भाष्ये जीवपदं वा 'जीवयति' इति व्युत्पत्त्या चिच्छक्तिपरमिति न विरोधः । किञ्च 'श्वेताश्वतरशाखिनोऽपि 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति च ब्रह्मणश्शक्तिरेव तस्य ज्ञानं बलं क्रिया चेति वर्णयन्ति । शक्तिः स्वयमात्मेति च वर्णयन्ति । न च तत्रात्मशब्दस्य देवशब्देन समासः । अनात्मरूपदेवाभावेन तदन्वयवैयर्थ्यप्रसंगात् । शक्त्यन्वये जडशक्तिव्यावर्त्तकत्वेन सार्थकत्वात् 'ते ध्यानयोगानुगताः प्रापश्यन् शक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ॥ तया विच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमन्तं महादेवमपश्यन्दिव्यचक्षुषा ॥' इति वायुसंहितायां पाशविच्छेदकत्वविशेषणेन 'समेत्य ते महात्मनो मुनयो ब्रह्मवादिनः । वितेनिरे बहून् वादान् ज्ञानविज्ञानसंश्रयान् ॥ किमस्य जगतो मूलमात्मा वास्माकमेव हि । कोऽपि स्यात्सर्वभावानां हेतुरीश्वर एव च ॥ इत्येवं मन्यमानानां ध्यानकर्मावलंबिनाम् । आविरासीन्महादेवी गौरी गिरि-

वरात्मजा ॥ निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम् ॥' इति कूर्म-पुराणवचनजातेन च तदुपबृंहणेन तस्याश्शिवशक्तेस्सकलपाश-विच्छेदकगौरीरूपत्वावगमाच्च । अपि च । त एव श्वेताश्वतर-शाखिनो 'विविधा श्रूयत' इत्याद्युदाहृतज्ञानत्वादिप्रकारव्यतिरेकेण 'स एको ब्रह्मण आनन्द' इत्यादिश्रुतिषु आनन्दाद्यनेकप्रकारवती श्रूयत इति च वर्णयन्तीत्यर्थः । यद्वा । 'विविधा श्रूयते सा' इत्यस्य सैव शक्तिरानन्दवल्ल्यां विविधा पक्षिप्रकारा श्रूयत इत्यर्थः । विशब्दो हि लोकवद्वेदेऽपि पक्षिणि प्रयुक्तो दृश्यते । यथा 'वयस्सुपर्णा उपसे-दुरिन्द्रम्' इति । विविधैव श्रूयते ज्ञानबलक्रियारूपा च भवतीति ज्ञानत्वादिभिः प्रकारविशेषैस्समुचितमर्थं समर्पयतो हि विविधेत्यस्य ज्ञानादिशब्दवदेव प्रकारविशेषसमर्पकत्वं युक्तम् । विविधा बहुप्रकारेत्युक्त्वा कैः प्रकारैर्बहुप्रकारेत्याकांक्षायां ज्ञानत्वादिप्रकारै-रित्युच्यते इति योजनायाञ्च शब्दास्वारस्यं विविधेत्यस्य व्यर्थ-कल्पता च । ब्रह्मशक्तेर्बहुप्रकारत्वस्य उपनिषदन्तरेषु प्रतिपादना-दर्शनेन 'श्रूयत' इत्यस्यानन्वयापत्तिश्च । व्युष्टीष्टकोपधानमन्त्रे 'एका सती बहुधोषो व्युच्छसि' इति श्रवणेऽपि वैदि-कस्य श्रूयत इत्यस्य वैदिकत्वप्रत्यासक्त्या वैदिकग्राहकत्ववदौ-पनिषदत्वप्रत्यासक्त्या ततोऽप्यन्तरंगौपनिषदश्रुतिग्राहकत्वं युक्तम् । 'परास्य शक्तिः' इति ब्रह्मधर्मत्वेन श्रुतायाश्शक्तेः 'स एको ब्रह्मण आनन्द' इति तद्धर्मत्वेन श्रुतस्यानन्दस्य च भेदानुक्तेरैक्ये लाघव-मस्तीत्यवतरतो लाघवतर्कस्यानुग्राह्यत्वप्रमाणाकांक्षायां तदाकांक्षितप्र-माणरूपतया योजनञ्च 'विविधे' त्यस्य युक्त्यन्तरमित्ययमर्थः पण्डितानां

हृदयंगमः ॥ ५ ॥ ननु, शिवस्य धर्मज्ञानरूपा चिच्छक्तिश्चैतन्यरूपैव न चेतनरूपापि । चेतनत्वे तदीयज्ञानेच्छादिव्यवहारार्थं तत्रापि जीवेष्विव चिच्छक्त्यन्तरस्यांगीकरणीयत्वापत्तेः । तत्परिणामरूपाणां ज्ञानेच्छादिवृत्तीनां धर्मिभूतशिवज्ञानेच्छादिरूपत्ववत् तदीयज्ञानेच्छादिरूपत्वस्याप्यंगीकारे जीवचिच्छक्तीनामपि तथैव रीत्या ज्ञातृत्वापत्तेः । अत शिवमहिषीत्वेन प्रसिद्धा ' गौरी शिवा सर्वमंगळा ' इत्यादि नामवती शक्तिश्शिवधर्मरूपायाश्चिच्छक्तेरन्या । न तु तद्धर्मरूपा । पुराणादिषु तस्याश्शिवधर्मत्वप्रसिद्धिस्त्वयुतसिद्धधर्मवन्नित्यसंबंधित्वेनानपायित्वसाम्यात् । अत एव पाञ्चरात्रतन्त्रेषु महालक्ष्म्याः परवासुदेवपरमाहन्तारूपतया तद्धर्मत्वप्रतिपादनेऽपि तत् सर्वमौपचारिकमिति स्वतन्त्रचेतनान्तरत्वमेव वैष्णवैरङ्गीकृतम् । उक्तं हि लक्ष्मीतन्त्रादिषु 'स वासुदेवो भगवान् क्षेत्रज्ञः परमो मतः । विष्णुर्नारायणो विश्वो विश्वरूप इतीर्यते । अहन्तया समाक्रान्तं तस्य विश्वमिदं जगत् । वस्त्ववस्तु[1] च तन्नास्ति यन्नालीढमहन्तया । तस्य या परमा शक्तिर्ज्योत्स्नेव हिमदीधितेः । सर्वावस्थागता देवी स्वात्मभूतानपायिनी । अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी । वासुदेवः परं ब्रह्म नराणामयनम्महत् । तस्याहं परमा शक्तिरहन्तानन्दचिन्मयी ' इत्यादिवचनैरहन्तादिरूपपरवासुदेवधर्मत्वं लक्ष्म्याः । तथापि न्यायसिद्धाञ्जनादिषु लक्ष्मीं प्रकृत्यशक्तित्ववादास्तु पत्नीत्वादिरूपेण विशेषणत्वाभिप्रायाः । ' इच्छा संविदन्तहन्ता ' दिव्यपदेशा अपि प्रणयानुविधेयत्वस्वयंप्रकाशत्वस्वरूपानपायित्वादिविशेषपरा[2] द्रष्टव्या इति तेषां वचनानां गति मुक्त्वा, तस्याः स्वतन्त्रचेतनान्तरत्वमेवाङ्गीकृतम् । एवञ्च ' देवात्मशक्तिम् ' इति

---

१. ' वस्तुतस्तु ' इति ग पाठः २. ' स्वरूपकत्वादि ' इति ख पाठः ।

श्वेताश्वतरमन्त्रस्यात्मविशेषणानुसारेण उपबृंहणानुसारेण च स्वतन्त्रशक्तिरूपगौरीविषयत्वेऽप्यानन्दमयवाक्यस्य शिवधर्मरूपचैतन्यसुखात्मकचिच्छक्तिविषयत्वाङ्गीकारात् तत्रात्मशब्दो न सङ्गच्छते। अन्तर्यामिब्राह्मणे विज्ञानात्मपर्यायो यथाकथञ्चित् जीवविषयो योजनीयः। ब्रह्मचिच्छक्तिविषयत्वेऽपि तस्यामात्मशब्द औपचारिको नेतव्यः। गार्गिब्राह्मणे तस्यां देवताशब्दोऽपि तथैव नेतव्य इतीमां शङ्कां निराकरोति—

**ऐकार्थ्ये चिन्तिते तां सवितुरिति मनोर्व्युष्टिमन्त्रैर्बुधानां**
**या गौरी सैव शंभोस्सुमतिरिति भवत्येव निस्संशया धीः।**
**तद्योग्यैर्वृत्तिभेदैर्मतिरपि मतिमत्येव कैश्चित्स्वनिष्ठैः**
**स्वाम्यर्हैरेव कैश्चित्स्वकरगतधनैर्भोगवान् खल्वमात्यः॥६॥**

यजुर्वेदभागे 'तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां पयसा महीं गाम्' इत्याम्नायते मन्त्रः। अत्र सवितुर्वरेण्यश्शिवः। 'यदा तम' इति मन्त्रे 'तदक्षरं तत्सवितुर्वरेण्यम्' इति श्रवणात्। तस्य च सुमतिस्तदीया चिच्छक्तिः, सोत्तरार्धे 'या प्रथमा व्यौच्छत् सा धेनुरभवद्यमे। सा नः पयस्वती धुक्ष्वोत्तरामुत्तरां समाम्' इति व्युष्टीष्टकोपधानमन्त्रेष्वाम्नातस्य मन्त्रस्यार्थेन विशेषिता। व्युष्टीष्टकोपधानमन्त्राश्च 'इयमेव सा या प्रथमा व्यौच्छत्' इत्यारभ्य प्रवृत्ताः पञ्चदशापि 'वधूर्जजान नवगज्जनित्री सूर्यपत्नी विचरतः प्रजानती' इत्यादिमन्त्रलिंगेन देवीसूक्तत्वप्रसिद्ध्या च गौरीविषया इति स्पष्टमेव। अस्मिन्नर्थे पुराणवचनान्यप्यग्रे दर्शयिष्यन्ते। अतश्शिवस्य चिच्छक्तिरेव गौरीति श्रुतिपुराणप्रति-

पन्नोऽर्थः कुयुक्तिभिर्न बाधमर्हति । ब्रह्मधर्मत्वेनावतिष्ठमानाया एव चिच्छक्तेः स्वयमपि चेतनान्तरत्वेनाप्यवस्थाने कानुपपत्तिः । तदीयाः केचन ज्ञानेच्छादिपरिणामाः शिवस्य ज्ञानेच्छादयो भवन्ति । केचन शिवसङ्कल्पानुसारेणैव शक्तेर्ज्ञानेच्छादयो भवन्ति । यथा राज्ञामात्यवशे स्थापितेषु वस्त्राभरणादिषु केचन राज्ञः केचन राजसङ्कल्पानुसारेणामात्यस्य च भोग्या भवन्तीति हि समर्थयितुं शक्यम् । वैष्णवैरपि लक्ष्मीनारायणयोरेवमेवाहन्ताहमर्थरूपत्वे समर्थयितुं शक्ये किमर्थं तल्लक्ष्मीतन्त्रादिवचनजातमुपेक्षितमिति न विद्मः । अस्माकं तु पाञ्चरात्रप्रमाण्ये अभिनिवेशाभावात् यद्यपि तन्नावश्यं समर्थनीयम् । अथापि तदभ्युपगमेऽपि न कश्चिद्विरोधः । चिच्छक्तेर्नारायणात्मतां प्राप्ताया एव हि प्रपञ्चाकारतापत्तिरस्माभिरिष्यते । तथा च चिच्छक्तेरिव नारायणस्यापि प्रपञ्चे तादात्म्येन नियन्तृत्वनिबन्धनशरीरशरीरिभावेन चाहंभाव उपपद्यते । इयांस्तु भेदः । नारायणस्य प्रतिब्रह्माण्डं भेदात्तस्य तद्ब्रह्माण्डावच्छिन्नप्रपञ्चमात्रविषयोऽहंभावः । चिच्छक्तेस्सकलब्रह्माण्डावच्छिन्नतद्बहिर्भूतसनारायणसकलप्रपञ्चविषयो ऽहंभाव इति । शिवस्य तु सचिच्छक्तिसनारायणसकलप्रपञ्चविषयोऽहंभावः । स तु शिवस्य शरीरशरीरिभावमात्रनिबन्धनः । चिच्छक्तिनारायणयोः तादात्म्यशरीरशरीरिभावोभयनिबन्धनः । तयोः स्वोपादानके प्रपञ्चे नियन्तृत्वेन तच्छरीरकत्वस्यापि सद्भावात् । एतदभिप्रायमेव लक्ष्मीतन्त्रेऽपि वचनं दृश्यते— 'कश्चित्केषाञ्चिदात्मा स्यात् तस्यान्येषाञ्च कश्चन । तस्याप्येवमितीत्थं तु यत्रैष व्यवतिष्ठते । अद्धा तमद्धनः पारं परमात्मानमूचिरे ॥' इति ॥ ६ ॥ एवं ब्रह्मधर्मज्ञानरूपायाश्चिच्छक्तेः स्वयमपि ज्ञातृतायां न काचिदनुपपत्तिरित्युक्तम् । अमुमेवार्थं दृढीकुर्वन्

आनन्दवल्ल्यां यत्परमं व्योम आयतनत्वेनोक्तं तदेवानन्दमयः 'स एको ब्रह्मण आनन्द' इति श्रवणात् ब्रह्मधर्मश्चेत्यनुपपन्नेयं योजना, आयतनस्यायतनवद्धर्मत्वायोगादिति शङ्कान्तरमपि निराकरोति—

**शंभोर्ज्ञानक्रियेच्छाबलकरणमनश्शान्तितेजश्शरीर-**
**स्वर्लोकागारदिव्यासनवरमहिषीभोग्यवर्गादिरूपा ।**
**सर्वैरेतैरुपेता स्वयमपि च परब्रह्मणस्तस्य शक्तिः**
**सर्वाश्चर्यैकभूमिर्मुनिभिरभिनुता वेदतन्त्राभियुक्तैः ॥ ७ ॥**

परब्रह्मणश्शिवस्य शक्तिरेव तस्य ज्ञानेच्छाकृतिबलतेजःप्रभृतिगुणरूपेण शरीरेन्द्रियमनःप्राणरूपेण विविधभोग्यभोगस्थानोपकरणरूपेण सह भोक्तुर्दिव्यमहिषीरूपेण च तमासेवते । स्वयमपि ज्ञानेच्छादिभिरुक्तैस्सर्वैरप्युपेता पुरुषरूपेण दिव्यमहिषीयुक्ता च भवति । आहुश्चाभियुक्ताः— 'शक्तिश्शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमासनजालमिच्छा । ऐश्वर्यमावरणमायतनानि च त्वं किं तन्न यद्भवसि देवि शशाङ्कमौलेः ॥ योऽयं चकास्ति गगनार्णवरत्नमिन्दुर्योऽयं सुरासुरगुरुः पुरुषः पुराणः । यद्वामममर्धमिदमन्तकसूदनस्य देवि त्वमेव तदिति प्रतिपादयन्ति ॥' इत्यादि । 'परास्य शक्तिर्विविधैव श्रूयत' इत्यादिमन्त्रोऽप्यमुमर्थं क्रोडीकरोति । 'आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मनआनन्दम् । शान्तिसमृद्धममृतम्' इति श्रुतिरप्युक्तमर्थमाविष्करोति । 'यदेष आकाश आनन्द' इति श्रुत्युक्ता चिच्छक्तिरेव ब्रह्मणश्शरीरं तयैव सत्तया तत्सत्यात्म । 'को ह्येवान्यात् कः प्राण्यात्' इति श्रुतेः । प्रपञ्चस्य स्वस्यापि प्राणभूतायां तस्यामेवारामः क्रीडास्य । तयैव मनसा तत्प्रयुक्तानन्दानुभवोऽस्य । तयैव शान्त्या

तदानन्दानुभवप्रयुक्तविषयवैराग्यरूपया समृद्धश्च ब्रह्मेति श्रुतेस्तात्पर्यम् । एवं सर्वाश्चर्यनिधानभूतायां तस्यां न किञ्चिदनुपपन्नमिति ज्ञानत्वेऽपि ज्ञातृत्वमुपपद्यते । शिवानन्दरूपायास्तस्याः स्वयञ्चेतनान्तरत्वेनानन्दानुभवितृत्वमप्युपपद्यते । यथा खलु शिवः स्वात्मरूपं स्वकीयचिच्छक्तिरूपं तद्वृत्तिजालरूपञ्चानन्दमनुभवति एवं शक्तिरपि स्वाश्रयशिवरूपं स्वात्मरूपं स्वकीयकतिपयवृत्तिजालरूपञ्चानन्दमनुभवतीत्यङ्गीकारे न काचिदनुपपत्तिः । तथा शिवाश्रितायाश्शक्तेश्शिवासनत्वं क्षित्याश्रितस्य शैलस्य क्षितिधरत्वमिवोपपद्यते इति तत्रापि नानुपपत्तिरिति सर्वं समञ्जसम् ॥ ७ ॥

एवं तावच्छक्तौ कारणत्वान्वयानुपपत्तिः परिहृता । अथ चिच्छक्तावेव कारणत्वमार्जवेनान्वेति न ब्रह्मणीति प्रतिपादयितुमुपक्रमते—

**अस्यामानन्दवल्ल्यामुपरि च भणितं युज्यते कारणत्वं**
**नाधारेऽस्याविकारे भगवति विमले ब्रह्मणि श्रीमहेशे ।**
**आकाशोऽयं विकारी स तु परमशिवो निर्विकारश्च सम्यक्**
**छन्दोगैर्नामरूपान्वितमतदयितं चामनद्भिर्विविक्तः ॥ ८ ॥**

'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे'तिच्छन्दोगा आकाशं नामरूपप्रपञ्चान्वितं तदाधारपरब्रह्मरूपं शिवमतदयितं नामरूपस्पर्शरहितञ्चामनन्ति । तैराकाशो विकारित्वेन शिवो निर्विकारत्वेन च विविक्त इत्यर्थः ॥ ८ ॥

नन्वाकाशो नामरूपयोर्निर्वोढृत्वेन श्रुतः न तु तदात्मना विकारित्वेनेत्याशंक्याह—

१. 'भवति हि' इति ख पाठः ।

**आकाशे दृश्यते निर्वहितृपदमिदं लोकसिद्धं प्रसिद्ध्या**
**स्वारब्धामाशु पारं गमयति महतीं यः क्रियां तत्र शक्तम् ।**
**तत्राभावात् क्रियायाः क्वचिदुपचरितं कारणत्वेऽन्तरंगे**
**वाच्यं तत्कार्यरूपाप्युपचयसहितं तद्विकारित्वमेव ॥ ९ ॥**

आकाशे यन्निर्वहितृपदं श्रूयते तदारब्धमहाक्रियासमापयितृरूपकर्तृविशेषवाचितया प्रसिद्धं लोके।[1] 'समापयत्ययत्नाद्यः प्रारभ्य महतीं क्रियाम् । स हि निर्वाहको लोके विद्वद्भिर्व्यपदिश्यते' इति । इह तु क्रियानुपादानान्मुख्यार्थो नान्वेतीति निर्वहितेत्यस्य लक्ष्योऽर्थः परिग्राह्यः । स त्विहाभ्यर्हितहेतुत्वरूप इति युक्तम् । आरब्धमहाक्रियासमापयितृरूपमुख्यार्थांतरंगसादृश्यरूपत्वात् अन्तरंगसादृश्यग्रहणसंभवे च बहिरंगसादृश्यस्योपचारनिमित्तत्वेन ग्रहणायोगात् । अभ्यर्हितहेतुत्वं च निमित्तापेक्षयोपादानस्य कार्ये तादात्म्येनानुवर्तमानतयान्तरंगकारणस्य सर्वसंप्रतिपन्नमिति कारणस्य कार्यावस्थारूपोपचयप्राप्तिरूपं तद्विकारित्वात्मकं तदुपादानत्वमेव 'निर्वहिते' त्यस्यार्थः पर्यवस्यतीत्यर्थः ॥

एवमाकाशवाक्येन विकारित्वमुच्यत इत्युपपादितम् । अथ ब्रह्मवाक्येन निर्विकारत्वमुच्यत इत्येतदुपपादयति—

**एवञ्च ब्रह्मणो यत्तदुपरि जगदस्पर्शवाक्यं प्रवृत्तं**
**तद्बुद्धिस्थं निषेधेत् परगगनगुणं तद्विकारित्वरूपम् ।**
**एवं सत्यात्मताया न विहतिरमृतत्वस्य चोक्तेः कृता स्यात्**
**सूत्रेऽप्यर्थान्तरत्वग्रहणमिदमभिप्रायमद्धा कृतं स्यात् ॥ १० ॥**

---

१. 'वाची । तथा लोके प्रसिद्धेः ।' इति ख पाठः ।

'ते यदन्तरा तद्ब्रह्म' त्यत्रान्तराशब्दस्य नामरूपमध्यवर्त्तित्वं मुख्यार्थः। सोऽपि मुख्यार्थोऽत्र न संभवति। न हि नामरूपे परस्परासंवलिते कचिद्विभक्तावस्थाने वर्तेते। न वा तयोर्मध्ये गुरुशिष्ययोर्मध्ये कमण्डलुवत् ब्रह्म वर्तते। अतोऽत्र तद्विषये औदासीन्यरूपं तदुभयसंबन्धराहित्यमन्तराशब्देन माध्यस्थ्यवाचिना लक्षणीयम्। 'अभ्यर्थनाभङ्गभयेन मानी माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे' इत्यादिषु हि मध्यस्थशब्देनौदासीन्यरूपमभ्यर्थनासंबन्धराहित्यं लक्ष्यत इति दृष्टम्। एवञ्चान्तराशब्दो नामरूपसंबन्धं ब्रह्मणो निषेधन् प्राचीनवाक्ये प्रस्तुतं विकारविकारिभावरूपमेव निषेधेत्, न तु सम्बन्धसामान्यं सम्बन्धान्तरं वा। बुद्धिस्थस्यैव निषेधप्रतियोगित्वेनान्वयौचित्यात्। एवं सत्येव 'तदमृतं स आत्मा' इति ब्रह्मण्यात्मशब्देनोच्यमानस्य जगदन्तर्यामित्वरूपस्य नामरूपप्रपञ्चेन सह नियम्यनियामकभावसम्बन्धस्य न विहतिः। अमृतत्वस्य च सर्वात्मना विनाशाभावरूपस्य च न विहतिः। अन्यथा ब्रह्मणः कार्यात्मना विकारित्वे कार्यनाशस्तस्यैव नाश इत्यमृतत्वस्य विहतिर्भवेत्। एवं सत्येव च 'आकाशोऽर्थान्तरत्वादिव्यपदेशा' दित्येतद्वाक्यार्थनिर्णायक (ब्र. १. प. ३. सू. ४२.) सूत्रे अर्थान्तरत्वग्रहणमुक्तार्थपरतया समञ्जसं कृतं भवेत्। तत्र ह्यर्थान्तरत्वशब्देन 'ते यदन्तरे' त्यस्यार्थोऽनूदितः। अर्थान्तरत्वञ्च भिन्नत्वम्। ततश्च नामरूपाभ्यां विकारविकारिभावेन तादात्म्यसम्बन्धराहित्यरूपं भिन्नत्वं 'ते यदन्तरे' त्यस्यार्थ इत्येतदभिप्रायमर्थान्तरत्वग्रहणं समञ्जसं भवेत्। अन्यथा भिन्नत्ववाचिनोऽर्थान्तरत्वशब्दस्य नेह सामञ्जस्यं भवेदित्यर्थः। एवं सति सौत्रहेतोरयमर्थः पर्यवस्यति। अर्थान्तरत्वस्य भिन्नत्वस्य नामरूपाभ्यां विकारविकारिभावेन तादात्म्यसम्बन्धराहित्यरूपस्यादिः

पूर्वनिर्दिष्टं तत्प्रतियोगिभूतं विकारविकारिभावेन तादात्म्यं तव्द्यपदेशात् 'नामरूपयोर्निर्वहिता' इति तस्य व्यपदिष्टत्वादाकाशश्चिच्छक्तिरिति ॥ १० ॥ एवं ब्रह्मणो निर्विकारत्वे शक्तेर्विकारित्वे च छन्दोगोपनिषद्वाक्यमुदाहृतम् । अथ श्वेताश्वतरोपनिषन्मन्त्रमुदाहरति—

**प्रज्ञाशक्तेः प्रसारं क्षरणरहिततां विश्वकर्तुश्शिवस्य**
**वाचक्षाणं यदेत्यादिकमतिमहितं मन्त्रमप्यामनामः ।**
**येनाशेषं जगत्कारणविषयवचो वैदिकं विप्रकीर्णं**
**तात्पर्यादन्वितार्थं विवरणविधयाकारि गौरीसहाये ॥११॥**

'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी' इति मन्त्रे प्रज्ञाशक्तेः ततः प्रपञ्चसृष्टिसङ्कल्परूपेण प्रपञ्चात्मना च प्रसरणरूपं विकारित्वं ब्रह्मणः क्षरणराहित्यरूपमविकारित्वं च स्पष्टमेवाम्नातम् । अयं मन्त्रस्सर्वकारणवाक्यानां सद्ब्रह्मादिसाधारणपदयुक्तानां प्रजापतिनारायणादिदेवतान्तरवाचिपदयुक्तानां चाविशेषेण शिवे पर्यवसानं प्रदर्शयितुं प्रवृत्त इत्यस्माभिश्शिवतत्वविवेकादिषूपपादितम् । तत्र कथं कारणवाक्यानां शिवे पर्यवसानं सङ्गच्छते परब्रह्मणस्तस्य कौटस्थ्यश्रवणादित्याकाङ्क्षायां 'तदक्षर'मित्यनेन 'अथ परा यया तदक्षरमधिगम्यत' इत्याद्यक्षरपदयुक्तकारणवाक्यानां शिवे पर्यवसानं प्रदर्शयता शिवस्य सर्वविधक्षरणाभावकीर्तनात् कार्यात्मना क्षरणाभावरूपं निर्विकारत्वमप्युक्तं भवतीति कौटस्थ्यश्रुतिप्राप्तं निर्विकारत्वमनुमन्यैव 'प्रज्ञा च तस्मात्प्रसृता पुराणी' इत्यनेन 'तदैक्षत' 'सोऽकाममत' इत्यादीनां जगत्सृष्टिसङ्कल्पप्रसरणप्रतिपादककारणवाक्यानां 'आत्मन

आकाशस्सम्भूत' इत्यादीनां वियदादिप्रपञ्चप्रसरणप्रतिपादककारण-वाक्यानां च शिवे पर्यवसानं प्रदर्शयता नित्यसिद्धप्रज्ञारूपायाः शिवचिच्छक्तेस्सृष्टिसङ्कल्पसृज्यपदार्थरूपेण विकारित्वं शिवस्य तु तद्द्वारकं विकारित्वं साक्षान्निर्विकारत्वेन न विरुध्यत इत्यतः कौटस्थ्य-श्रवणाविरोधेन सकलकारणवाक्यपर्यवसानभूमित्वश्रवणमुपपद्यत इति प्रतिपिपादयिषितार्थोपपादकतया अस्याप्यर्थस्य विवक्षितत्वात् प्रकृतार्थोदाहणविषये तात्पर्यवत्त्वादत्यर्थमहितोऽयं मन्त्रः । तस्मादुदाहृतमन्त्रानुसारेणापि शक्तिशिवयोर्विकारित्वाविकारित्वव्यवस्थाङ्गीकरणीयेति भावः ॥ ११ ॥

श्वेताश्वतरोपनिषद्येव मन्त्रान्तरमुक्तार्थे प्रमाणमुदाहरति—

**मन्त्रश्छन्दांसि यज्ञाः क्रतव इति परव्योम्न एवास्य जन्म**
**स्रष्टृत्वं केवलश्च प्रथयति तदधिष्ठातुरेणांकमौलेः ।**
**मायां त्वित्यादिमन्त्रस्तदुपरि पठितस्तस्य चार्थं विवृण्वन्**
**तस्मान्नारायणत्वं समधिगतवतो विश्वजन्मेति चाह ॥१२॥**

'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च देवा वदन्ति। तस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः।' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वाचराचरम् ।' इत्याम्नायते । 'ऋचो अक्षरे परमे व्योमन्' इति तत्पूर्वमन्त्रप्रकृतां परमव्योमशब्दितां शैवीं शक्तिं परामृश्य पञ्चम्या तस्यास्समस्तजगदुपादानत्वप्रतिपादनात् तस्या मृद इव विकारित्वं सृजत इति पदेन शिवस्य निमित्तत्वं प्रतिपादयता तस्य कुलालवद-विकारित्वं प्रतिपाद्यते । द्वितीयमन्त्रे 'मायां तु प्रकृतिं विद्यात्' इत्यनेन पूर्वमन्त्रोपवर्णितोऽयमेवार्थः स्थिरीक्रियते । तत्र मायाशब्द-

शिवशक्तिपरः । 'तस्य माया वयुनं ज्ञानम्' इति वैदिकनिखण्टौ ज्ञानपर्यायत्वेन परिगणनात् कूर्मपुराणे 'कैषा भगवती देवी शङ्करार्धशरीरिणी' इति प्रश्नोत्तरे तस्य 'तत्र सर्वजगत्सूतिश्शक्तिर्मायेति विश्रुता । तयेदं भ्रामयेदीशो मायावी पुरुषोत्तमः ।' इति मायाशब्दस्य शैवचिच्छक्तौ प्रसिद्धत्वप्रतिपादनाच्च । तथाच मायां शैवीं प्रकृतिमेव तत्र तत्र प्रपञ्चप्रकृतित्वेन प्रतिपाद्यमानां विद्यादित्यर्थः । अनेन, क्वचित् परमव्योमशब्देन जगत्प्रकृतिः प्रतिपाद्यते 'यतः प्रसूता जगतः प्रसूती' इत्यत्र जगत्प्रकृतिशब्देन 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यत्राजाशब्देन । तेषां भिन्नार्थत्वे विरोधः स्यादिति शंका सर्वेषामपि तेषां मायैकविषयत्वविभावनया निरस्ता भवति ॥१२॥

नन्वेवमपि न विरोधशंकानिरासः । 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिश्रुतिषु हि शिवस्य जगत्प्रकृतित्वं प्रतिपाद्यते । नारायणानुवाकादिषु नारायणस्य । न च शिववाचिनो नारायणवाचिनो वा शब्दस्य शैवी चिच्छक्तिरर्थो भवितुमर्हतीति शंका अवशिष्टपादत्रयेण निरस्ता । तत्र 'मायिनम्' इति नित्ययोगे मत्वर्थीयप्रत्ययः । ततश्च महेश्वरं मायिनमेव विद्यादित्यनेन शिवस्यापृथक्सिद्धकार्यावस्थाश्रयत्वरूपमेव प्रकृतित्वं तेन तेन श्रुत्यन्तरेण प्रतिपाद्यते न तु परिणामित्वरूपमिति विभावितम् । उत्तरार्धेन सकलजगदुपादानतया सबाह्याभ्यन्तरसकलजगद्व्यापकत्वेन 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतिषु प्रसिद्धं नारायणमनूद्य तस्य चिच्छक्त्यंशत्वमन्यतो प्राप्तं विधानेन चिच्छक्त्यै जगदुपादानत्वं तस्याः नारायणावस्थाप्राप्तिद्वारकमिति तदेव नारायणस्य जगदुपादानत्वं प्रतिपादयद्भिः

श्रुत्यन्तरैः प्रतिपाद्यत इति विभावितम्। ननु 'तस्यावयवभूतेन' इत्यत्र सर्वनाम्नः पूर्वार्धप्रकृतमहेश्वरपरत्वौचित्यात् तदवयवत्वमेव कस्य चित् प्रतिपाद्यत इति प्रतीयते । तदपि नारायणस्य प्रतिपाद्यत इति स्पष्टं न प्रतीयत इत्याशंकानिरासाय तस्य स्वोक्तार्थग्रहणौपयिकं मन्त्रान्तरानुग्रहं दर्शयति—

**यन्मन्त्रब्राह्मणैश्च स्मृतिवचनशतैरप्यभिव्यञ्जितार्थः**
**तद्विष्णोर्मन्त्रवर्यः परमपदमिति श्रावयत्यच्युतस्य ।**
**सर्वोपादानभावात्सकलजगदभिव्यापकोऽन्तर्बहिश्च**
**व्योम्नस्तस्यात्र मन्त्रेऽवयव इति स एवोक्त इत्युन्नयामः ॥**

'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्' इति वेदत्रयेऽप्याम्नायते मन्त्रः। अयं मन्त्रः शिवशक्तिं विष्णोः परमप्राप्यमूलरूपत्वेन प्रतिपादयतीति मन्त्रब्राह्मणरूपश्रुत्यन्तरार्थप्रत्यभिज्ञानेन उपबृह्मणस्मृतिवचनानुसारेण चावसीयते । कथम् । उपबृह्मणानि कूर्मपुराणे दृश्यन्ते । तत्र हि 'कैषा भगवती देवी शंकरार्धशरीरिणी। शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम्' इति ऋषीणां प्रश्नानन्तरं वचनम् । 'तेषां तद्वचनं श्रुत्वा ऋषीणां पुरुषोत्तमः । प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदम्' इति । अत्र कूर्मरूपिणा विष्णुनोपदेष्टव्यत्वेनौचित्यात् ध्यानविषयतया प्राप्तायां शिवशक्तौ 'स्वं परमं पद'मिति विशेषणेन विष्णुं प्रति तस्याः परमपदत्वमुक्तम्। तत्रैव तपश्चर्यया शिवमाराध्य प्रत्यक्षीभूतेन शिवेन सह कैलासे शिवभवनं गत्वा शिवासन एवोमासविधे निविष्टं कृष्णं दृष्ट्वा विस्मिता देवकन्याः प्रति शिववचनम् । 'एष धाता विधाता च कारणं कार्यमेव च । कर्ता कारयिता चैव भुक्तिमुक्तिफलप्रदः । भोक्ता पुमानप्रमेय-

स्संहर्ता कालरूपभृत् । स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः । कूटस्थो ह्यक्षरो व्यापी योगी नारायणाह्वयः । तारकः पुरुषो ह्यात्मा केवलं परमं पदम्। सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना । 'शान्ता तस्यां सदानन्दा परं पदमिति श्रुतिः ॥' इति । अत्र केवलं 'परमं पदम्' इत्यन्तेन कृष्णमहिमवर्णनानन्तरं कथमयं परमं पदं शक्तिर्हि तथा श्रुतिप्रसिद्धा इति शंकायां 'सैषा माहेश्वरी' इति श्लोकः । स पूर्वोक्तः कृष्णः एषा परिदृश्यमाना माहेश्वरी गौरी मम शक्तिः तस्यां परमं पदमिति श्रुतिरस्तीत्येतदभेदात् कृष्णोऽपि परमं पदमित्युक्तिरुपपद्यत इति भावः । न च विष्णुं प्रति परमपदत्वं श्रुत्योच्यते तत्तु तदभेदे सत्यपि विष्णौ व्यपदेष्टुमशक्यमिति शंक्यम् । 'तद्विष्णोः परमं पदम्' इति श्रुतौ सकलजीवांशभूतं विष्णुं प्रति परमपदत्वोक्त्या तदंशान् जीवान्प्रत्यपि परमपदत्वमर्थसिद्धमस्तीत्यर्थसिद्धस्य तस्य विष्णावपि व्यपदेष्टुं शक्यत्वात् । तथैव कृष्णतपश्चर्यानन्तरं शिवेन सह प्रत्यक्षीभूतायाः शक्तेः कृष्णं प्रति वचनम् । 'वत्स जाने तथानन्तां निश्चलां सर्वदाच्युत । अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव । त्वं हि नारायणस्साक्षात्सर्वात्मा पुरुषोत्तमः । प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः । पश्य त्वमात्मनात्मानममलं परमं पदम् । नावयोर्विद्यते भेद ऐक्यं पश्यन्ति सूरयः' इति । अत्रापि त्वं खलु परमं पदमिति श्रुतिप्रसिद्धा कथमहं परमं पदमिति कृष्णस्याकांक्षायां 'नावयोर्विद्यते भेद' इत्याद्युक्तम् । एवमादिभिरुपबृंहणस्मृतिवचनैरस्मिन्मन्त्रे प्रथमपादस्य शिवशक्तिविषयत्वं स्पष्टमवसीयते । 'आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरं परो यदि द्युते दिवि'

---

१. भेदं सत्येव विष्णौ व्यपदेष्टुं शक्यमिति' इति **ख** पाठः ।

'उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरं देवं देवत्रासूर्यमगन्म ज्योतिरुत्तमम्' इति मन्त्रार्थप्रत्यभिज्ञया पादान्तरयोस्तद्विषयत्वमवसीयते। प्रत्नस्य रेतसः प्राचीनस्य कारणस्य ज्योतिर्दीप्तिरूपा शक्तिः तद्वासरं वासरवन्मरीचिनिचयव्याप्तं पश्यन्ति तद्दर्शनयोग्या मुक्ताः। दिवः परं सम्यक् दीप्यत इति दिवुपरिस्थितमादित्यादिज्योतिरपेक्षयोत्कृष्टं परमानन्दात्मकपरमाकाशरूपं ज्योतिर्वत् पश्यन्तो वयं सर्वोत्कृष्टं परमव्योम सूर्यरूपं परमशिवज्योतिः प्राप्ता इति च मन्त्रद्वयार्थः। तथा 'मनसैतान् कामान् पश्यन्रमते य एते ब्रह्मलोके' इति छन्दोगोपनिषद्वाक्यार्थो द्वितीयपादे प्रत्यभिज्ञायते। तत्खलु वाक्यं युगपन्मिळितसर्ववैषयिकसुखात्मकब्रह्मानन्दानुभवं मुक्तानां प्रतिपादयति। इह द्वितीयपादोऽपि तमेवार्थं प्रतिपादयति यतस्तत्र सूरिशब्दो मुक्तपरः। 'विश्लोका यन्ति पथ्येव सूरा' इति श्वेताश्वतरमन्त्रे सूरिशब्दप्रयोगदर्शनात्। 'सदा पश्यन्ती' इति नित्यानुभाव्यत्वोक्त्या मुक्तानुभाव्यस्थिरपुरुषार्थब्रह्मानन्दरूपत्वं परमपदस्याविस्कृतम्। तस्य वैष्णवस्थानविशेषरूपत्वे ब्रह्मानन्दवन्नित्यानुभाव्यत्वायोगात्। तथा 'यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु' इति श्रुतिर्ज्योतिश्शब्दोक्तपरब्रह्मदीप्तिरूपायाश्शक्तेर्दिव उपरिभागस्थितेष्वप्राकृतलोकेषु व्यापनं प्रतिपादयति तदर्थोऽत्र तृतीयपादे प्रत्यभिज्ञायते। एवं श्रुत्यन्तरोपबृह्मणबलात् 'तद्विष्णोः' इति मन्त्रश्शिवशक्तेर्विष्णुं प्रति परमपदत्वं प्रतिपादयतीति निर्णये सति तदनुरोधेन 'तस्यावयवभूतेन' इत्यत्र षष्ठ्यन्तं पदं पूर्वमन्त्रप्रकृतव्योमपरामर्शीति समर्थनीयम्। तदवयवत्वं च नारायणस्य प्रतिपादयतीत्युपपादनीयम्। न्याय्यञ्चैतत्। उत्तरार्धेन हि सर्वचराचरव्याप्तिस्तदवयवत्वञ्चेत्युभयं न विधीयते।

एकवाक्यत्वप्रतीतेः। अतस्संभवत्प्राप्तिकानुवादेनाप्राप्तांशविधिरेष्टव्यः। अन्यत प्राप्तिश्च 'व्याप्तं सर्वं चराचरम्' इत्यस्यास्ति। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति हि श्रूयते। तदवयवत्वस्य तु नैवं कुतश्चित् प्राप्तिस्संभवतीति। एवं शिवस्य चिच्छक्तिमत्वं तदीयचिच्छक्त्यंशत्वं नारायणस्य च शंकरभगवत्पादानामप्यभिमतमित्युन्नीयते। तैः खलु शिवभुजंगप्रयातस्तोत्रे 'चिदाकारमेकं तुरीयं त्वमेयम्' इति शिवस्य चिच्छक्तिधर्मकत्वमुक्तम्। विष्णुभुजंगप्रयातस्तोत्रे 'चिदंशं विभुं निर्विकल्पम्' इति नारायणस्य चिच्छक्त्यंशत्वमुक्तम्। आम्भ्रणीसूक्तमन्त्रमप्युक्तार्थे साक्षिणमग्रे प्रदर्शयिष्यामः॥१३॥

नन्वेवं ब्रह्मणः प्रपञ्चाकारेण परिणामित्वाभावे तदीयचिच्छक्तेरेव नारायणरूपस्वांशद्वारा तदाकारेण च परिणामित्वे प्रकृत्यधिकरणं किं व्यवस्थापयितुं प्रवृत्तमिति समर्थनीयम्। न तावच्छक्तेः परिणामित्वं व्यवस्थापयितुमिति। सद्विद्यायाः सत्तारूपशक्त्याश्रयब्रह्मविषयत्वस्येक्षत्यधिकरणभाष्ये दर्शिततया तदनुरोधेन सद्विद्यागतप्रतिज्ञादृष्टान्तोदाहरणवतोऽस्याधिकरणस्य ब्रह्मविषयत्वावगमात्। नापि ब्रह्मणः स्वापृथक्सिद्धकार्याश्रयत्वरूपं प्रकृतित्वं व्यवस्थापितुमिति। ब्रह्मशक्तेः परिणामित्वे ब्रह्मणि तदपृथक्सिद्धाश्रये तथाभूतप्रकृतित्वस्य स्वत एव सिद्धेः 'परिणामात्' इति (ब्र. १. ४. २७.) सूत्रविरोधाच्च स्मृतिपादे ब्रह्मणः परिणामित्वं सिद्धं कृत्वा तत्र वैलक्षण्यादिबाधकोद्धारार्थं प्रवृत्तैः 'न विलक्षणत्वा' द्यधिकरणैर्विरोधाच्चेत्याशंक्याह—

**विश्वोपादानभावः श्रुतिषु पशुपतेर्नाविकारित्वरूपः**
**प्रोक्तः कौटस्थ्यभंगादपि तु तदपृथक्सिद्धकार्याश्रयत्वम्।**

**इत्थं निर्वोढुमेतत्प्रकृतिनयकृतिस्तत्परीणामितोक्ता**
**चिच्छक्तिद्वारिकैव स्मृतिचरणविचारास्तु तन्मात्रनिष्ठाः ॥**

प्रकृत्यधिकरणं ब्रह्मणो विश्वप्रकृतित्वश्रुतयः स्वापृथक्सिद्धकार्यावस्थाश्रयत्वमात्रपरा न तु परिणामित्वपराः कौटस्थ्यश्रुतिविरोधादिति व्यवस्थापयितुं प्रवृत्तम् । तत्र 'परिणामात्' इति (ब्र०-१-४-२७) सूत्रं ब्रह्मणः स्वापृथक्सिद्धकार्याश्रयत्वमुपपादयितुं ब्रह्मणश्शक्तिद्वारकपरिणामित्वनिरूपणपरम् । ब्रह्मशक्तेरेव वा परिणामित्वनिरूपणपरम् । अस्मिन् पक्षे 'परिणामात्' इत्यत्र 'आत्मकृतेः' इति सूत्रमनुवर्तनीयम् । आत्मनः स्वस्य कृतिः करणं वा शक्तिः 'स्वाभाविकी ज्ञानबलक्रिया च' इति तस्याः क्रियात्वश्रवणात् 'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् । ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायये' इत्यादिश्रुतिस्मृतिषु ब्रह्मणः संसारभ्रमणादिव्यापारे तस्याः करणत्वश्रवणाच्च । तथा च स्वक्रियारूपाया वा स्वकरणरूपाया वा नित्यसंबन्धिन्याश्शक्तेः परिणामात् स्वापृथक्सिद्धशक्त्यभिन्नचेतनाचेतनात्मकसकलकार्यावस्थाश्रयत्वरूपं वेदान्तेषु श्रुतं प्रपञ्चप्रकृतित्वं ब्रह्मणः कौटस्थ्यश्रुत्यविरोधेनोपपद्यत इत्युपपादितं भवति । यत्तु स्मृतिपादे 'न विलक्षणत्वादस्य तथात्वञ्च शब्दात्' (ब्र०२-१-४-सू) इत्यधिकरणं ब्रह्मणश्शिवस्य वियदादिजडप्रपञ्चात्मना परिणामित्वसिद्धान्तं सिद्धं कृत्वा तन्न संभवति चेतनाचेतनत्वेन ततो वैलक्षण्यादिति शंकामुत्पाद्य तत्समाधानार्थं प्रवृत्तं, यच्च 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (ब्र०-२-१-२६-सू) इत्यधिकरणं ब्रह्मणः कार्त्स्न्येन प्रप-

त्मना परिणामे ब्रह्मस्वरूपाभावप्रसंगः एकदेशेन परिणामे यत्प्रदेशावच्छिन्नैकदेशपरिणामस्तत्र प्रदेशे ब्रह्माभावप्रसंगस्तन्निरवयवत्वश्रुतिव्याकोपश्चेति शंकामुत्पाद्य तत्समाधानार्थं प्रवृत्तं, तद्यद्यपि न साक्षाच्छक्तिविषयत्वेन योजयितुं शक्यते। न विलक्षणत्वाधिकरणगतस्य सर्वनाम्नः प्रकृत्यधिकरणपर्यन्तानुवृत्तब्रह्मपरामर्शित्वात् निरवयवत्वव्याकोपस्यापि निरंशब्रह्मविषयत्वात्। तथापि तथाभूते ब्रह्मण्यपि परिणामित्वांगीकारे तत्र बाधकत्वेन शंक्यमानाः कुयुक्तयस्तात्पर्यलिंगान्वितश्रुतिविरोधादिभिराभासीभवन्ति किमुत शक्तेः परिणामित्वांगीकार इति तत्सर्वं कैमुतिकन्यायेन शक्तेरेव श्रुतं परिणामित्वमुपपादयितुं प्रवृत्तं तद्विषयमेवेति न कश्चिद्विरोध इति श्लोकार्थः॥

नन्वेवमपि 'तदनन्यत्वमारंभणशब्दादिभ्य' [ब्र०२. १. १५. सू] इत्यधिकरणविरोधः स्यात्। तत्र हि सद्विद्यागतारंभणशब्दादिभिः प्रपञ्चस्य ब्रह्मानन्यत्वमेवोच्यते न तु ब्रह्मशक्त्यनन्यत्वमित्याशंकापरिहारपूर्वकं शक्तिशिवयोर्विकारित्वाविकारित्वव्यवस्थां समर्थितामुपसंहरन्नेव जन्मादिवाक्यसूत्रतद्विषयवाक्यविरोधशंकां निरस्यति --

**यद्ब्रह्मानन्यतोक्तं तदपि तदपृथक्सिद्ध्यभिप्रायमीक्ष्यं**
**दैवार्षादिप्रयोगाः खलु बहुलतरास्तस्य तत्रापि दृष्टाः।**
**तस्माच्छक्तिर्विकारिण्यविकृतिरधिभूर्ब्रह्मणो लक्ष्म सौत्रं**
**शैवं चिच्छक्तिकं वाप्युचितघटनया युज्यते कारणत्वम्॥**

अस्त्यभिन्न इवापृथक्सिद्धेऽप्यनन्यशब्दः 'अन्यस्सन्व्याप्तितोऽनन्यः कर्ता कर्मानुसारतः' 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' अनन्यापि विभिन्नातश्शंभोस्सा समवायिनी। स्वाभाविकी च तन्मूला

प्रभा भानोरिवामला' इत्यादिदैवार्षपौरुषप्रयोगदर्शनात् । तदिहाप्यनन्यशब्दस्यापृथक्सिद्धार्थो ग्राह्यः । तस्मादविकारशिवः, विकारिणी तच्छक्तिरिति व्यवस्था युक्तैव इति सर्वं समञ्जसम् । इयमेका शंकावशिष्यते । शक्तिरेव परिणामिनीत्यंगीकारे ब्रह्मलक्षणानुप्रविष्टं कारणत्वं परिणामित्वं चेदसंभवः । अपृथक्सिद्धकार्यावस्थाश्रयत्वं चेत्तस्य शक्तिसाधारण्यादतिव्याप्तिः । न च निमित्तत्वविशेषणेन तन्निरासः । शक्तेरपि पञ्चकृत्यकारित्वाभ्युपगमादिति । अत्रायं परिहारः । शक्तिविशिष्टशिवो ब्रह्मशब्दार्थ इत्यग्रिमश्लोकमारभ्य पञ्चभिः श्लोकैरुपपादयिष्यते तत्र कारणत्वरूपं लक्षणं यदि शिवगतं शक्तिसाधारणमपृथक्सिद्धकार्यावस्थाश्रयत्वं यदि वा शक्त्यसाधारणं परिणामित्वमुभयथापि तद्विशिष्टनिष्ठं न भवति । तथा च विशिष्टतदेकदेशसंबन्धेनाद्यं विशिष्टविशेषणसंबन्धेन द्वितीयं ब्रह्मणस्तटस्थलक्षणं भविष्यतीति न कश्चिद्दोषः । विशिष्टगतं किञ्चिद्धर्मं संपाद्य तस्य लक्षणीकरणेऽपि संबन्धान्तरेणान्यत्रापि तस्य वृत्तेरतिव्याप्तिवारणाय संसन्धविशेषविवक्षावश्यं कार्या । लक्षणमात्र एवेयं रीतिः । अन्यथा ज्ञानशब्दादिकमप्यात्माकाशादिलक्षणं न भवेत् । 'घटे ज्ञानं' 'वने सिंहनाद' इत्यादिप्रतीत्या तस्यान्यत्रापि वृत्तेः। तस्माद्विशेषणविशेष्योभयसाधारणं विशेषणमात्रगतं वा कारणत्वं विशिष्टस्य ब्रह्मणो लक्षणमित्येतदुपपद्यत इति भावः ॥१५॥

अथ ब्रह्मविचारशास्त्रं गतेन 'आनन्दमयोऽभ्यासात्' इत्यधिकरणेन विचार्यमाणस्यानन्दमयवाक्यस्य शक्तिविषयतया योजनमयुक्तमित्याशंकामुद्भाव्य निराकर्तुमुपक्रमते—

**शास्त्रं ब्रह्माधिकारं कथमिव घटते शक्तिवाक्यस्य चिन्ते-**
**त्येवं शंकाकलंके शृणु तदवहितः शास्त्रसिद्धान्ततत्त्वम् ।**

**शंभुं शक्त्या विशिष्टं प्रथयति परमं ब्रह्म वेदान्तराशि-**
**र्द्वावप्यंशौ विचिन्त्यौ तदिह समरसीभावमान्ये विशिष्टे ॥**

यथा 'दानानि पात्रसात्कुर्यात्' इत्यादिविधिषु ब्राह्मणे पात्र-शब्दप्रवृत्तौ विद्यादिकं विशेषणं, यथा वा 'इन्द्राय राज्ञे पुरोडाशम्' इत्यादिविधिषु इन्द्रदेवताशब्दप्रवृत्तौ राजत्वादिकं विशेषणं, तथा 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिविधिषु शिवे ब्रह्मशब्दप्रवृत्तौ शक्तिर्विशेषणमिति विशेषणवद्विशेष्यस्यापि ब्रह्मशब्दार्थान्तर्भावात् विचार्यत्वमविशिष्टम् । अथापि न विचार्येत यदि मोक्षार्थेषु ध्यान-पूजादिषु शक्तिरन्विता न स्यात् । नन्वेवं शिवशक्तिमेळनात्मकं सामरस्येनान्वितं विशिष्टमेव मुमुक्षुभिर्ध्यानपूजादिभिर्माननीयं न तु विशेष्यमात्रम् । 'तस्मात्सह तया शक्त्या हृदि पश्यन्ति ये शिवम् । तेषां शाश्वतिकी सिद्धिर्नेतरेषामिति श्रुतिः । यथा देवस्य देव्याश्च कुर्यात्स्नानादिकं तथा । न तु कश्चिद्विशेषोऽस्ति तत्र तौ सदृशौ यतः । प्रथमं देवमुद्दिश्य कुर्यात् स्नानादिकां क्रियाम् । पश्चाद्देव्यै प्रकुर्वीत देवदेवस्य शासनात् ।' इत्यादिवचनप्रामाण्यात् । तस्मात् ध्यानपूजा-दिसिद्धये शक्तितत्त्वमपि ज्ञातव्यमिति तद्ज्ञानाय तद्विषयाणामपि वाक्यानामत्र विचारस्संगत इति भावः ॥ १६ ॥

"विशिष्टं ब्रह्म इति वेदान्तराशिः प्रथयति" इत्युक्तमर्थं कतिपय-वाक्योदाहरणेन स्फुटयति—

**ब्रह्मेत्यंबाविशिष्टं प्रकटयति ऋतं सत्यमित्यादिमन्त्र-**
**श्शंभुं तस्मिन्विशेष्यं प्रथयति च युजे वामिति ह्येष मन्त्रः ।**
**अंबा मेषा उषा इत्ययमपि च मनुः स्पष्टयत्यन्यमंशं**
**ब्रह्मेत्युक्तात्ततोऽन्तर्बहिरपि पुरुषात् सेयमाकाशरूपा ॥१७॥**

'ऋतं सत्यम्' इति मन्त्रे कृष्णपिङ्गलं परं ब्रह्मेत्युक्तिर्मिलितं शिवं पिङ्गलं परं ब्रह्मेति प्रकटयति । तयोर्ब्रह्मभावे मेलनं विशेषणविशेष्यभावेनेत्यमुं विशेषं 'युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोका यन्ति पथ्येव सुरेः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ।' इति श्वेताश्वतरोपनिषदाम्नातमन्त्रश्रुतपूर्व्यत्वलिङ्गमवगमयति । मन्त्रस्यायमर्थः । वां युवयोश्शिवशक्त्योर्मध्ये पूर्व्यं पूर्वं स्वार्थे यत् प्रत्ययः । विशेष्यतया प्रधानभूतं ब्रह्म शिवरूपं नमोभिर्युजे युनज्मि । छान्दसो विकरणव्यत्ययः । शिवस्य सर्वनमस्कारपर्यवसानभूतत्वात् तं नमस्कारांकितैश्श्लोकैर्भजामीत्यर्थः । नमस्कारश्लोका विशेष्यन्ते । सूरेर्विदुषश्शिवस्वरूपाभिज्ञस्य तद्ज्ञानान्मुक्तिं प्राप्तस्य मम श्लोका वाचिकशिवनमस्कारसन्दर्भरूपाः 'अहं श्लोककृत्' इति मुक्तकृत्यत्वेन श्रुतिप्रसिद्धाः । पथ्येव पथि हिताः त्वरितनिर्विकारमार्गगमनाः सदश्वा इव वियन्ति निर्गलप्रवाहतया निर्गच्छन्ति । पथ्यशब्दात् 'सुपां सुलुक्' इत्यादिसूत्रेण जस आकारादेशः । विश्वे सर्वेऽप्यमृतस्य शिवस्य 'एतानि ह वा अमृतस्य नामधेयानि' इति श्रुतिप्रसिद्ध्यामृतनामधेयस्य पुत्राः 'दिव्या गणा बहुरूपाः पुराणाः' इत्यादिश्रुतिप्रसिद्धाः स्कन्दनन्दिकेश्वरादयः शृण्वन्ति मम श्लोकानादरेणाकर्णयन्ति । अमृतपुत्रा विशेष्यन्ते । ये दिव्यानि दिवि भवानि चिदाकाशरूपे नित्यकैलासे स्थितानि धामानि भवनान्यातस्थुः आस्थितवन्त इति । अत्र मन्त्रे यद्यपि सर्वनमस्कारपर्यवसानभूमितया नमस्कारविषयत्वलिङ्गोपस्थापिते शिवे पूर्वं ब्रह्मेत्युक्त्या ब्रह्मकोटावपूर्वमपि किञ्चिद्वस्त्वस्तीत्येतावदेवावगम्यते । न तु सा शक्तिरिति । तथापि 'एषो उषा अपूर्व्या व्युच्छति प्रिया दिव' इति सामवेदाम्नातमन्त्रे शक्तावपूर्वत्वविशेषणं सैव ब्रह्म-

कोटौ विशेषणभूता द्वितीयेत्यवगमयति । तत्र हि मन्त्रे महाप्रळयरूपनि-
शावसानेषु स्वोन्मेषेण तमोनिरासं कुर्वती प्रथमोषःकालरूपेत्येवं 'इय-
मेव सा या प्रथमा व्यौच्छत्' इति याजुर्वेदिकसूक्तप्रसिद्धा जगतां जन-
यित्री ब्रह्मविष्णुरुद्रैस्त्रिभिरप्यासेव्या पराशक्तिरेव उषा उच्यते । न-
त्विदानींतन उषःकालः । दिवः प्रियेति विशेषणानन्वयात् । तेन हि
दिवः स्वर्गलोकस्य महाकैलासाख्यस्य तद्वर्तिनः परब्रह्मणः शिव-
स्य तं प्राप्तस्य मुक्तवर्गस्य च भोग्यतया प्रियेत्युच्यते। यद्यपि 'एत-
स्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति सर्वभूतभोग्यत्व-
श्रुतेस्सर्वस्यापि प्रिया भवति ब्रह्मानन्दरूपा शक्तिस्तथाप्यतिक्षुद्रं
दुःखसमानमिति हैरण्यगर्भपर्यन्तवैषयिकसुखजातमविगणयतश्शिवस्य
मुक्तवर्गस्य च भोग्यतया निरतिशयानन्दरूपत्वं ख्यापयितुं 'दिव'
इति विशिष्योक्तिः । एवञ्च यद्यप्यपूर्व्योषा इत्युक्त्या प्राक्तनीमुषसमपे-
क्ष्य भिन्नेदानींतन्युषा प्रतीयते। तथापि विशेषणान्तरानुरोधेन 'युजे
वां ब्रह्म पूर्व्यम्' इति मन्त्रे शिवस्य ब्रह्मकोटौ पूर्वत्वोक्त्या तत्र द्वि-
तीयाकांक्षानुरोधेन ब्रह्मकोटौ पूर्वं शिवमपेक्ष्यापूर्वत्वमपूर्वेत्यनेनोच्यत
इत्येवाभ्युपगन्तुं युक्तम् । एवं शिवविशेषणत्वेन शक्तेर्ब्रह्मशब्दान्त-
र्भावादेव छन्दोगोपनिषदि गायत्रीविद्यायां 'यद्वै तद्ब्रह्म' इति इदं
वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशोऽयं
वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशोऽयं
वाव स योऽयमन्तर्हृदय आकाश' इति सकलजगदाधारत्वेन
पुरुषाद्बहिरन्तः स्थितायाः परमाकाशरूपायाश्शक्तेः ब्रह्मरूपत्वमुक्तम् ।
तस्माद्विशिष्टं ब्रह्मेति युक्तमित्यर्थः ॥ १७ ॥

इतोऽप्येवमित्याह—

**ब्रह्मानन्दत्वमुक्त्वा प्रथममिह जगत्कारणस्याद्यवल्ल्यां**
**तस्यैव ब्रह्मतापि प्रकटमभिदधे ब्रह्मवल्ल्यां पुनर्यत् ।**
**जानीमस्तद्द्वयोरप्युपनिषदि परब्रह्मकोटित्वमुक्तं**
**ब्रह्मांशत्वात्तथात्वव्यवहृतिरुपचारोक्तिरित्युन्नयामः ॥१८॥**

इहैव तैत्तिरीयाणामुपनिषद्येकवाक्यतामापन्नयोरानन्दवल्लीभृगुवल्ल्योर्मध्ये प्रथमवल्ल्यां 'स एको ब्रह्मण आनन्द' इति परमाकाशरूपायाश्शक्तेर्ब्रह्मधर्मानन्दत्वमुक्त्वा द्वितीयवल्ल्या 'मानन्दो ब्रह्मेति व्यजानात्' इति तस्या एव ब्रह्मत्वमुक्तम् । तेन द्वयोरपि ब्रह्मशब्दार्थान्तर्भावेन ब्रह्मकोटित्वमिष्टमवगम्यते । ब्रह्मशब्दार्थैकदेशत्वेऽपि ब्रह्मांशत्वनिमित्तत्वादुपचारादेवानन्दो ब्रह्मेति व्यवहार इत्यप्युन्नीयत इत्यर्थः ॥ १८ ॥

छन्दोगोपनिषद्युपकोसलविद्यागतं वाक्यमप्युक्तार्थे प्रमाणमुदाहरति—

**प्राणो ब्रह्मेति जानाम्यथसुखगगने ब्रह्मणी द्वे तु नेति**
**प्रश्नं प्रत्युत्तरत्वं भजति खलु तयोरैक्यमात्रोपदेशः ।**
**तस्याभिप्रायमित्थं विवरितुमुचितं पश्यतानन्दवल्ल्या-**
**माकाशानन्दशब्दोदितमभवदिहाप्येकमेव द्विधेति ॥ १९ ॥**

सत्यकामे ब्रह्मचर्यं वसतस्तदीयानग्नीन्परिचरत उपकोसलस्य परिचर्यया प्रीतैस्तदीयैरग्निभिरुपकोसलं प्रति ब्रह्मोपदेशः कृतः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति । तदनन्तरमुपकोसलस्येदमग्नीन्प्रति प्रश्नवाक्यम् । 'विजानाम्येवाहं यत् प्राणो ब्रह्म इति । कञ्च खञ्च न विजानामि' इति । तस्यायमाशयः । 'प्राणोऽस्मि प्रज्ञात्मा प्राणस्य

प्राणम्' इत्यादिषु प्राणशब्देनोपदिष्टं वस्तु ब्रह्मेति जानामि कं सुखं खं गगनं ब्रह्मेति ततोऽन्यत् ब्रह्मद्वयं न जानामि 'यदेष आकाश आनन्दो न स्यात्' इत्याकाशानन्दशब्दाभ्यामुक्तमेकमेव खलु 'आनन्दो ब्रह्म' इति श्रुतं न तु शिवादन्यत्सुखं गगनं चेत्येवं ब्रह्मद्वयमस्तीति। तदनन्तरमग्नीनामिदमुत्तरवाक्यं 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति। तस्यायमाशयः। न ह्यस्माभिः कखशब्दोक्तं ब्रह्मद्वयमुपदिष्टं किंत्वेकमेवोपासनाकालेष्वाकाशरूपसुखत्वेन सुखरूपाकाशत्वेन च तद्ब्रह्म द्वेधोपासनीयमित्येतदर्थं द्वेधोपदिष्टमित्युत्तरवाक्यार्थः। श्रुतिस्तथैवोपसञ्जहार 'प्राणञ्च हास्मै तदाकाशञ्चोचुः' इति। ब्रह्मोपदेशमपेक्षमाणायोपकोसलाय प्राणात्मकं प्राणशब्दोक्तशिवाख्यं तद्धर्माकाशात्मकं च ब्रह्मोपदिदिशुरित्यर्थः। तस्मादुदाहृतश्रुत्यनुसारेणापि शिवशक्त्योर्द्वयोरपि ब्रह्मशब्दार्थान्तर्भावोऽङ्गीकरणीय इति भावः॥ १९॥

नन्वस्मिन्विषये यावत्यः श्रुतय उदाहृतास्ताभिस्सर्वाभिरपि शक्तिशिवयोः प्रत्येकमेव ब्रह्मभावः स्फुरति। न तु विशेषणविशेष्यभावेन। 'द्वे ब्रह्मणी वेदितव्ये परञ्चापरञ्च' इति श्रुत्यन्तरमपि तदनुरोधि दृश्यते। अतस्तत्स्वारस्यात् तथैव किमिति नांगीक्रियत इत्याशंकायामाह—

**प्रत्येकं ब्रह्मभावः स्फुरति यदनयोरेवमाद्यैः प्रमाणैः**
**नार्हत्येवैतदंगीकृतिमपि च ऋतं सत्यमन्त्रोक्तमेव।**
**नो चेत् ब्रह्मश्रुदर्थाननुगतिरखिलाद्वैतशास्त्रप्रकोपो**
**नैकाधीन्यञ्च सर्गादिषु परनभसश्चेशधर्मत्वभंगः॥ २०॥**

तथांगीकारे शिवाख्ये परब्रह्मणि प्रवर्तमानस्य ब्रह्मशब्दस्य त्रिविधपरिच्छेदराहित्यरूपार्थहानिस्तस्मिन् प्रवर्तमानस्य ब्रह्मशब्दस्या-

र्थात् बहिर्भूतस्यापि कस्यचिद्वस्तुनोऽगीकारे श्रुतिस्मृतिपुरणागमादिरूपाद्वैतशास्त्रविरोधः । स्वतन्त्रब्रह्मद्वयांगीकारे सर्गानामेकाधीनत्वभंगः । परमाकाशस्य स्वातंत्र्यांगीकारे शिवधर्मत्वश्रुतिविरोधश्चेति बहुदोषापत्तेर्विशिष्टब्रह्मवाद एव ऋतं सत्यादिमन्त्रानुमतः स्वीकरणीय इति भावः ॥ २० ॥

शक्तिविशिष्टः शिवः परं ब्रह्म न तु केवल इत्यभ्युपगमेऽनिष्टमाशंकते—

**नन्वेवं कैटभारेः कथमिव घटतामंशशक्त्यंशता ते**
**ब्रह्माद्याः पञ्च जीवा इति हि समुदितं शैवपौराणिकाद्यैः ।**
**विष्णोः स्वस्थानसिद्धिः क्रतुफलमुदितं वाजिनां ब्राह्मणे च**
**छन्दोगानाञ्च मन्त्रे तमनुवदति ऋग्येन देवा इतीयम् ॥२१॥**

शिवपुराणे वायुसंहितायां ‘शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यस्सर्वज्ञः परमात्मेत्युदाहृतः । नामाष्टकमिदं पुण्यं शिवस्य प्रतिपादकम् । आद्यं तु पञ्चकं तत्र शान्त्यतीताद्यनुक्रमात् । संज्ञा सदाशिवादीनां पंचोपाधिपरिग्रहात् । उपाधिविनिवृत्तौ तु यथास्वं विनिवर्तते । पदमेव हि तन्नित्यमनित्याः पदिनः स्मृताः । पदानां परिवृत्तिः स्यात् मुच्यन्ते पादिनो यतः । परिवृत्त्यन्तरे भूयस्तत्पदप्राप्त्युपाधिना । आत्मान्तराभिधानं स्यात् यदाद्यं नामपञ्चकम् ।’ इति वचनानि पठ्यन्ते । एभिर्वचनैश्शिवमहेश्वररुद्रविष्णुपितामहसंज्ञाः संज्ञिनां सदाशिवादीनां पदमात्रस्यैंद्रादिपदवन्नित्यत्वं तेषामनित्यत्वञ्च मुक्तिभाक्त्वं तन्नाम्नामिन्द्रादीनामिव तत्तत्पदाधिकारोपाधिकत्वञ्च प्रतिपादयद्भिरिन्द्रादिवत्तेषां जीवत्वं स्पष्टीकृतम् । शैवपाशुपतादि-

भिरप्येवमेवांगीकृतम्। वाजसनेयिशाखायां शतपथब्राह्मणे 'पुरुषो हवै नारायणोऽकामयतातितिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति। स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् तमाहरत्तेनायजत तेनेष्वात्यतिष्ठत् सर्वाणि भूतानीदं सर्वमभवत्' इति। अनेन 'अत्यतिष्ठद्दशांगुलम्' इति 'पुरुष एवेदं सर्वम्' इति पुरुषसूक्तोक्तमहिमशालि वैष्णवं पदं यज्ञानुष्ठानफलमिति स्पष्टं प्रतिपादितम्। छन्दोगानामृग्ग्रन्थे 'सोमं राजानं वरुणमग्निमन्वारभामहे आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्' इति मन्त्रानन्तरं 'इत एत उदारुहन् दिवः पृष्ठान्यारुहन् प्रभर्जयो यमा। पाथो यथांगिरस उद्ययुः' इति मन्त्र आम्नायते। तत्रैत इत्यनेन पूर्वमन्त्रप्रकृतान् सोमवरुणादीन् परामृश्य तेषामितः क्षितित ऊर्ध्वमारोहणमुक्त्वा किमारुक्षन्नित्याकांक्षायां तदधिकारानुसारेण दिव उपरिभागानारुक्षन्नित्युक्तमर्थं विशदीकृत्य 'यथांगिरस उद्ययुः' इति दृष्टान्तकथनेन 'अंगिरसो वै सत्रमासत। अंगिरसः सुवर्गं लोकं यन्तः। अंगिरस इमे सत्रमासते ते। सुवर्गं लोकं न प्रजानन्ति। तेभ्य इदं ब्राह्मणं ब्रूहि' इत्यादिश्रवणात् अंगिरसो यथा यज्ञानुष्ठानेन स्वर्गमारुक्षन्नेवमेतेऽपीत्ययमर्थः प्रतिपादितः। प्रभर्जय इति विशेषणेन प्रकर्षेन यज्ञेन हविषां भर्जनं कृतवन्त इत्यर्थकेन च एते देवा यज्ञानुष्ठानेन द्यामारुक्षन्नित्ययमर्थो दर्शितः। उदाहृतमन्त्रब्राह्मणोक्तमर्थं 'येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः। येनांगिरसो महिमानमानशुस्तेनैतु यजमानः स्मस्ति' इति यजुर्वेदाम्नाता ऋगनुवदति। अत्र हि यच्छब्दयोगेनानूद्यमानस्यार्थस्य प्राप्तिसापेक्षत्वा- 'दित एत उदारुहन्' इति मन्त्रः पुरुषमेधब्राह्मणञ्च प्रापकमेष्टव्यमिति तदनुसारेण देवशब्दः सोमवरुणविष्ण्वादिपरः। देवा' इत्य-

नेन संभवद्ग्रहणानामादित्यवसुरुद्रगणानां पृथग्ग्रहणम्। 'आदित्यान्विष्णुं सूर्यम्' इति पुरोवादगतादित्यशब्दो नैकस्य सूर्यस्य वाचकः। सूर्यशब्देन तस्य पृथग्ग्रहणात्। किन्त्वादित्यगणवाचकः। एकवचनं तु बहुपत्नीकेष्टिप्रयोगे 'पत्नीं सन्नह्य' इति मन्त्रगतं पत्नीमित्येकवचनमिव प्रत्येकगतैकत्वाभिप्रायम्। आदित्यगणग्रहणञ्च श्रुत्यन्तरेषु तत्समभिव्याहृतत्वेन प्रसिद्धयोर्वसुरुद्रगणयोरप्युपलक्षणमिति ख्यापनार्थम्। तत्रादित्यशब्दस्यादित्यगणपरत्वं 'आदित्यान् विष्णुं सूर्यम्' इति ऋग्यजुःपाठेनाप्यवगम्यते। गणान्तरोपलक्षणत्वं तु 'अग्ने यन्मे तनुवा ऊनं तन्म आपृण' इति मन्त्रस्य 'यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावैतदाह' इति व्याख्यानेन स्वकीयोनग्रहणस्य प्रजापशूनोपलक्षणत्ववद्व्याख्यानेनैवावगन्तव्यम्। ज्योतिः पदमग्निपरम्। 'येन देवा ज्योतिषोर्ध्वा उदायन्' इत्यस्य मन्त्रस्योख्याग्निसमिन्धने विनियुक्तत्वात्। तथा च 'आहवनीयाग्निसाध्येन कर्मणा ऊर्ध्वलोकगमनद्वाराग्निसाध्यं भवति' इत्यनेन मन्त्रेण सोमादिदेवपदानां यज्ञानुष्ठानफलत्वमेवोदाहृतब्राह्मणप्रतिपन्नमनूद्यते। तस्मात् पुराणादीनां मन्त्रब्राह्मणवाक्यानाञ्च उपबृह्मणोपबृह्मणीयभावापन्नतया वनसिंहन्यायेन मानतर्कन्यायेन चान्योन्यानुगृहीततया प्राबल्यात्तैराप्तं विष्णोर्जीवत्वमनिवार्यमिति भावः॥ २१॥

विष्णुपदस्य कर्मफलत्वे प्रमाणान्तराण्यप्युदाहरति—

**विष्णुत्वप्राप्तये च क्रतुजपविधयश्चोदितास्तत्र तत्र**
**स्वैश्वर्यं विष्णुनाप्तं बहुविधतपसा भारतेऽप्येवमुक्तम्।**
**यद्यप्येकैकमात्रात्क्रतुजपतपसां तत्पदं न प्रसिद्ध्येत्**
**यज्ञाद्यैर्ब्रह्मधीवन्न खलु समुदितैस्तत्प्रसिद्धैर्विरोधः॥ २२॥**

'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति' इति 'यद्विष्णुक्रमान्क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमान् लोकाननपजय्यमभिजयति' इति यजुर्वेदे समाम्नायते। "मयि वर्च' इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानास्त्रयाणां लोकानामाधिपत्यं गच्छन्ति" इति सामवेदे समाम्नायते। अत्र त्रैलोक्याधिपत्यं विष्णुपदमेव। 'विष्णुरेव भूत्वेमान् लोकान् जयति' इति तस्य विष्णुधर्मत्वश्रवणात्। विष्णुना स्वैश्वर्यं शिवाराधनरूपेण बहुविधेन तपसाप्तमिति 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्। पदं यद्विष्णोरुपमन्निधायि तेन पासि गुह्यन्नामगानाम्' 'रौद्रं लिंगं महाविष्णुर्भक्त्या शुद्धं शिलामयम्। चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम्' इत्यादिश्रुतिपुराणवचनैरवगतम्। काशीखण्डेऽपि विष्णुपट्टाभिषेकाध्याये स्पष्टं प्रतिपादितम्। भारतेऽप्येवमुक्तम्। 'ततो गच्छेन्सुपर्णाक्षं त्रिषु लोकेषु विश्रुतम्। यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा। वरांश्च सुबहून् लेभे दैवतैरपि दुर्लभान्। उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत। ममान्येभ्यः प्रियतरो लोके कृष्ण भविष्यसि। त्वन्मुखञ्च जगत्सर्वं भविष्यति न संशयः।' अयमारण्यपर्वण्युक्तोऽर्थः सौषुप्तिके पर्वणि शिववचनेन स्मारितः। 'सत्यशौचार्जवत्यागैस्तपसा नियमेन च। क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा। अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा। तस्मादिष्टतमः कृष्णादन्यो मम न विद्यत' इति। हरिवंशेऽपि शिववचनेनोक्तार्थो दृढीकृतः। 'इति संस्तूयमानस्तु भगवान् वृषभध्वजः। प्रसार्य दक्षिणं हस्तं वासुदेवमथाब्रवीत्। मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम। पारिजातस्य हर्तासि माभूत्ते मनसो व्यथा। पुरा मैनाकमा-

श्रित्य तपस्त्वमकरोर्यदा। तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि। अवध्यस्त्वमजय्यस्त्वं मत्तश्शूरतरस्तथा। भवितासीत्यवोचं यत्तत्तथा न तदन्यथा' इति। एवं श्रुतिपुराणाद्यवगतं विष्णोर्जीवत्वं प्रत्याख्यातुमशक्यम् । यद्यपि विष्णुत्वप्राप्त्यर्थत्वेन विहितानां तादर्थ्येन विष्णुनानुष्ठितानां च क्रतुजपतपःप्रभृतिकर्मणां मध्ये एकैकेन कर्मणा तत्पदप्राप्तिः न संभवति। तथापि यथा 'तमेतं वेदानुवचनेन ब्राह्मणा विविदन्ति यज्ञेन दानेन तपसा नाशकेन' इति श्रुतौ यज्ञादिषु प्रत्येकं तृतीयाश्रवणेऽपि किञ्चिद्यज्ञानुष्ठानमात्रेण ब्रह्मज्ञानासिद्धेस्समुदितानां चिरकालाभ्यस्तानामेव यज्ञादीनां ब्रह्मज्ञानसाधनत्वं तथा विष्णुभावप्राप्त्यर्थं विष्णुनानुष्ठितत्वेन तत्प्राप्तिसाधनत्वेन च श्रुतानां सर्वेषां कर्मणां समुदितानां यथावच्चिरकालमभ्यस्तानाञ्च तत्प्राप्तिसाधनत्वं भविष्यतीति न काचिदप्यनुपपत्तिः ॥ २२ ॥

ननु, भारत एव भगवद्गीतासु मोक्षधर्मगते नारायणीयेऽन्यत्रापि तत्र तत्र प्रदेशे विष्णुपुराणादिषु च विष्णोः परब्रह्मभावः प्रकटितस्सर्वेषामप्यास्तिकानामनुमतश्च तस्य का गतिरित्याकांक्षायामाह—

**विष्णोर्या तत्पुराणागमवचनशतेष्वास्तिकानामभीष्टा**
**गीता नारायणीयप्रभृतिषु च परब्रह्मभावप्रसिद्धिः ।**
**ब्रह्माभिव्यक्तिभेदाद्बलमथनमुखालभ्यतस्सोपपाद्या**
**लोकेशस्यान्धकारेरपि बहुषु यथा तत्पुराणेषु दृष्टा ॥ २३ ॥**

सत्यमस्ति विष्णोः परब्रह्मभावप्रसिद्धिः । ब्रह्मरुद्रयोरप्यस्त्येव सा ब्राह्मशैवपुराणागमादिसिद्धा । सा तयोः सृष्टिसंहाररूपजगद्व्यापारार्थादिन्द्रादेवतान्तरापेक्षयातिशयितात् परब्रह्माभिव्यक्तिभे-

दादुपपादनीया । तथेयमपि पालनरूपजगद्व्यापारार्थात्तदभिव्यक्ति-भेदादुपपादनीयेत्यर्थः ॥ २३ ॥

एवमेवास्योपपादनमवश्यं कार्यमित्याह—

**एवं सत्येव तस्मिन्नखिलमवरतापादकं दोषजातं**
**सांगत्यं प्रापितं स्यात्तदपि हि विहितं भारतादिभ्य एव ।**
**न्यायेनैषा व्यवस्था समुपनिपतिता प्राक्तनानामपीष्टा**
**साक्षाच्चैषा सरोजप्रभवसमुदिता मारुतेनोपदिष्टा ॥ २४ ॥**

अस्य परब्रह्मभाव इव जननमरणभयक्रोधशोकाज्ञानादिरूपस्सांसारिकदोषविलासोऽपि भूयान् भारतरामायणविष्णुपुराणादिभ्य एवावगतः । तदुभयं परब्रह्मशक्त्यधिष्ठितजीवविशेषत्वाभ्युपगम एवाविरोधेनोपपद्यते । न चैच्छिकत्वेन विरोधपरिहारः । हेयेषु जननमरणादिष्विच्छाया अपि कर्मकृतत्वात् । उक्तं हि वायुसंहितायां 'न हि स्वेच्छाशरीरत्वं स्वातन्त्र्यायोपपद्यते । इच्छैव तादृशी पुंसां यस्मात्कर्मानुसारिणी । स्वीकर्तुं स्वेच्छया देहं हातुञ्च प्रभवन्ति हि । ब्रह्मादयः पिशाचान्ताः किं ते कर्मातिवर्तिनः ।' न च शोकाज्ञानादीनामभिनयमात्रसिद्धत्वाङ्गीकारेणाविरोधः । तथा सति रामावतारे 'न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च । तदेतदनुशोचामि वयोऽस्या ह्यतिवर्तते ॥ इत्यादितदीयवचनानां कृष्णावतारे सौभवसवृत्तान्तवर्णनगततदीयशोकाज्ञानादिवचनानां च अनृतत्वापत्त्या 'सत्यवाक्यो दृढव्रतः' 'सत्यसन्धो जितेन्द्रियः' 'धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि । यदि मे ब्रह्मचर्यं स्यात्सत्यं च मयि तिष्ठति' इत्याद्यनेकवचनविरोधापत्तेः । तस्मादुक्तरीत्यैवाविरोधोपपा-

दनं कार्यम्। एवमेषा व्यवस्था शंकरभगवत्पादैर्बृहदारण्यकभाष्ये 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्यादि सृष्टिप्रकरणे 'स यः पूर्वस्मात्सर्वस्मात्पाप्मन औषत्तस्मात्पुरुषः' इति वाक्यव्याख्यानावसरे कथं परब्रह्मणः पाप्मसंबन्ध इत्यादिशङ्कामुद्भाव्य हिरण्यगर्भकर्तृका सृष्टिरत्रोच्यते न तु साक्षात्परब्रह्मकर्तृका। हिरण्यगर्भो हि ब्रह्मशक्त्यधिष्ठितो जीवविशेष इति समादधानैर्दर्शिता। प्रकृतविषयेऽप्येषा योजनीया। न्यायसाम्यात्। साक्षाच्च तेनैव हिरण्यगर्भेण दर्शिता ऋषीन् प्रति वायुनोपदिष्टा। 'लोकानुग्रहणायैव शिवेन परमेष्ठिना। सदाशिवादयस्सर्वे मूर्त्यात्मानो ह्यधिष्ठिताः। अयस्यग्नौ समाविष्टे दाहोऽग्नेरेव नायसः। मूर्त्यात्मस्वेवमैश्वर्यमीश्वरस्यैव नात्मनाम्। न हि काष्ठो ज्वलत्यूर्ध्वमग्निरेव ज्वलत्यसौ। काष्ठस्यांगारता नाग्नेरेवमत्रापि योज्यताम्। मूर्त्यात्मस्वपि रागाद्या दोषास्सन्त्येव वस्तुतः। तथापि तेषामेवैते न शिवस्य तु सर्वथा। अग्नावपि समाविष्टे ताम्रं खलु सकालिकम्। इति नाग्निरसौ दूष्यस्ताम्रसंसर्गकारणात्। नाग्नेरशुचिसंसर्गादशुचित्वमुपेयते। अशुचेस्त्वग्निसंयोगात् शुचित्वमुपजायते। एवं शोध्यात्मसंसर्गान्न ह्यशुद्धः शिवो भवेत्। शिवसंसर्गतस्त्वेष शोध्यात्मैव विशुध्यति' इति। तस्मात् न्यायानुगृहीतवचनबलादेवं व्यवस्थाङ्गीकरणेति भावः॥ २४॥

अथैवं व्यवस्थाभ्युपगमापादकं विष्णोः जीवभावे प्रमाणं दर्शयति—

**गीतास्वाद्यं प्रपद्ये पुरुषमिति वचो यद्धि कृष्णस्य दृष्टं**
**योगारूढेन पूर्वं प्रकथितमिति यच्चानुगीतासु वाक्यम्।**
**यच्च स्वस्वान्तबुद्ध्यध्यवसितगुरुशिष्योक्तिभंगीप्रक्लृप्ता-**
**पाख्यानाख्यानमेतैरपि च समुचिता भाति सैषा व्यवस्था॥**

गीतासु 'ततः परं तत्परिमार्गितव्यं यस्मिन्गता न निवर्त्तन्ति भूयः। तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी' इति भगवतः कृष्णस्य वचनं दृश्यते। अत्राद्यमिति विशेषणेन 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर एव च। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः' इति यः क्षराक्षरपरत्वेन गीतासूपदिष्टः उत्तमपुरुषस्स एवोच्यत इति स्मारितम्। 'यस्मिन्गता न निवर्त्तन्ति भूयः।' इति विशेषणेन 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया। तमेवं शरणं गच्छ सर्वलोकमहेश्वरम्। तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम्' इति यत्प्रपदनात् परमवैराग्यरूपोपायलाभपूर्वकमनिवर्तनस्थानप्राप्तिरुपदेक्ष्यते स एवेह ईश्वरशब्देन पुरुषशब्देन स्वप्रपदनीयो निर्दिष्ट इति स्मारितम्। तेनैव स्वप्रपत्तिरियं स्वस्य तथाभूतस्थानप्राप्त्यर्थेत्यपि सूचितम्। तदर्थं स्वप्रपदनीय ईश्वराख्य आद्यः पुरुषः शिव एवेति 'यदातमो' मन्त्रचतुर्थपादार्थानुवादकेन 'यतः प्रवृत्तिः प्रसृता पुराणी' इति विशेषणेन द्योतितम्। तत्र प्रवृत्तिशब्देन 'प्रज्ञा च तस्मात्प्रसृता पुराणी' इति 'यदातमो' मन्त्रचतुर्थपादोपन्यस्ता प्रज्ञैवोच्यते। 'स्वाभाविकी ज्ञानबलक्रिया च' इति तस्याः क्रियारूपत्वस्यापि श्रुतत्वात्। ननु, गीता 'स्वीश्वरस्सर्वभूतानां' इत्याद्युक्त्यनन्तरं 'सर्वगुह्यतमं भूयः शृणु मे परमं वचः' इत्युपक्रम्य 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' इत्युपदिश्य तस्य रहस्योपदेशविश्रान्तिभूमित्वमभिप्रेत्य तदनन्तरमेव गीताशास्त्रं समापितम्। अर्जुनेनापि तच्छ्रवणानन्तरमेव 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं

तव' इति तदुपदिष्टार्थः स्वानुष्ठेयत्वेनाङ्गीकृतः । तदेतत्सर्वं कृष्णस्यैव मुक्त्यर्थं प्रपदनीयत्वे संगच्छते । कृष्णस्यैव गीतासु परब्रह्मभावस्तत्र तत्राध्याये बहुभिः प्रकारैः प्रपञ्चितः । स मुक्त्यर्थं सर्वप्रपदनीयपरब्रह्मभूतः स्वयमन्यं मुक्त्यर्थं प्रपन्न इति कथमिदं श्रद्धेयम् । न च वाच्यं 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इत्यादिकं कृष्णस्य स्वेतरदेवताभजननिन्दावचनजातं श्रुत्वापि 'सर्वधर्मान् परित्यज्य' इत्यन्तिमोपदेशानन्तरं 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव' इति प्रतिज्ञायाप्यर्जुनः शिवभजनपर एव यावज्जीवमवर्त्तत । अतस्तदनुसारेण कृष्णविषयपरब्रह्मभावमुक्त्यर्थप्रपदनीयत्वपरगीतावचनानां शिवपर्यन्ततात्पर्यं कल्पनीयमिति उपदिष्टार्थविस्मरणेन देवतान्तरभजनोपपत्तेः । अत एवाश्वमेधिके पर्वणि युद्धारंभसमयोपदिष्टार्थो विस्मृत इति पुनः पृष्टवन्तमर्जुनं प्रति भगवता कृष्णेन पुनरपि सोऽर्थ उपदिष्ट इत्यनुगीतायां श्रूयते । तस्मात् कृष्णस्यान्यप्रपत्तिवर्णनमनुचितमिति चेदुच्यते । अनुगीतावचनान्यपि कार्त्स्न्येन गीतासु भगवद्वचनानां शिवपर्यन्ततात्पर्यगमकानि 'तमेव चाद्यं पुरुषं प्रपद्य' इति वचनस्वरसप्रतिपन्नार्थानुगुणानि चैव दृश्यन्ते । तथाह्यनुगीतोपक्रमे ह्येवं प्रस्तावः । विदितं ते महाबाहो सङ्ग्रामे समुपस्थिते । माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् । यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात् । तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः । मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः । भवांश्च द्वारकां गन्ता न चिरादेव केशव' इति पृष्टवन्तमर्जुनं प्रति श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् । धर्मस्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् । अबुद्ध्या यन्न गृह्णीथास्तन्मे सुमहदप्रियम् । नूनमश्रद्दधानोऽसि दुर्मेधा-

श्चासि पाण्डव । स हि धर्मस्सुपर्याप्तो ब्रह्मणः पदवेदने । न शक्यं तन्मया वक्तुं तथा भूयोऽप्यशेषतः । परं हि धर्मं कथितं योगयुक्तेन तन्मया ।' इति अत्र पूर्वं पारमेश्वरं योगमास्थाय तदेकाग्रमनसा मया तत्स्वरूपमुपवर्णितमिदानीं बहिर्मनसा तथा वक्तुं न शक्यत इति यत्कृष्णेनोक्तं तेन ज्ञायते कृष्णेन स्वस्य यावान् परब्रह्मभावगमकः परो महिमा वर्णितः यच्च स्वस्य भक्त्यानन्ययोपास्यत्वमुक्तं तत्सर्वं शिवाहंभावनारूपं योगमास्थाय प्रवर्तितं शिवपर्यन्तं 'प्राणोऽस्मि प्रज्ञात्मा तम्मामायुरमृतमुपास्स्व' इति इन्द्रवर्णितस्वमहिमजातस्योपास्यत्ववदिति । इदं तु गीतासु 'एवमुक्त्वा ततो राजन्महायोगीश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरम्' इति 'महायोगीश्वर' इति कृष्णविशेषणेन प्रदृश्यमाने रूपे ऐश्वरत्वविशेषणेण च प्रदृश्यमानरूपवद्वर्णितवर्णयिष्यमाणपरब्रह्मभावगमकमहिमादिकमपि शिवाहंभावभावनया स्वीयत्वेन वर्णनाविषयभूतं वस्तुतः शैवमेवेत्यनया भंग्या सूचितम् । अत एव कूर्मपुराणे 'ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया । स्वयमेव हृषीकेशः प्रीत्योवाच सनातनम् । गच्छ गच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि । भजस्व परया भक्त्या शरण्यं शरणं शिवम्' इति अर्जुनं प्रति व्यासवचनेन तत्रैव 'नारायणोऽपि भगवान्देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तरम्' इतीश्वरगीतान्ते कृत्स्नस्यापि भगवद्गीताशास्त्रस्य शिवविषयत्वं स्पष्टमेवोक्तम् । अनुगीतासु 'न शक्यं तन्मया भूयस्तथावक्तुमशेषतः' इत्युक्त्यनन्तरं भगवान् कृष्णः केन चित् सिद्धपुरुषेणायमेवार्थः काश्यपनाम्ने ब्राह्मणायोपदिष्टो मया श्रुतोऽस्ति तद्बलात्तमहं पुनरुपदेक्ष्यामीति प्रतिज्ञाय 'कथं शरीरा-

च्चयवते कथञ्चैवोपपद्यते । कथं कष्टाच्च संसारात् संसारी परिमुच्यते' इत्यादिना काश्यपसिद्धपुरुषप्रश्नोत्तररूपेण इतिहासेन वैराग्यार्थं पूर्वदेहपरित्यागदेहान्तरप्रवेशप्रकारमिह परत्र च संसारिणो दुःखबाहुल्यं वैराग्यदृढीकरणार्थभावनाविशेषान्विरक्तस्य संसारान्मोक्षोपायं योगञ्चोपदिश्य 'कच्चिदेतत्त्वया पार्थ श्रुतमेकाग्रचेतसा । तदापि च रथस्थस्त्वं श्रुतवानेतदेव हि' इत्युपसंहृतम् । तदनन्तरं कृष्णसिद्धपुरुषोपदिष्टमर्थजातं मनसा सप्रपञ्चमालोच्य सर्वमिदमर्थमेवेति निश्चिकायेत्ययमर्थः, कयोश्चित् ब्राह्मणदंपत्योर्गुरुशिष्यभावकल्पनया प्रवृत्तेन 'ब्राह्मणी ब्राह्मणं कं चित् ज्ञानविज्ञानपारगम् । दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत्' इत्यादिनेतिहासविस्तरेण दर्शितः । तदवसाने 'यदिदं ब्रह्मणो लिंगं क्षेत्रज्ञ इति संज्ञितम् । ग्रहीतुं येन तच्छक्यं लक्षणं तस्य तद्वद' इति बन्धमुक्तिफलभाजश्शरीरातिरिक्तस्य क्षेत्रज्ञस्य ग्रहणोपायपक्षमवतार्य भर्तृकृतस्तदुपायोपदेशोऽपि दर्शितः । 'क्वनु सा ब्राह्मणी कृष्ण क्वचासौ पुरुषर्षभः । याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत' इति अर्जुनेन पृष्टस्य कृष्णस्य उत्तरमुपवर्णितं 'मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् । क्षेत्रज्ञ इति यश्चोक्तस्सोऽहमेव धनञ्जय' इति । अनेनेतिहासकल्पनाभिप्रायः स्फुटीकृतः । तदेतत् सर्वमर्थजातं श्रुत्वा मुक्त्यर्थं वेद्यं ब्रह्म बुभुत्समानस्यार्जुनस्य तदनन्तरमेव प्रश्नः 'ब्रह्म यत्परमं वेद्यं तन्मे व्याख्यातुमर्हसि । भवतो हि प्रसादेन सुसूक्ष्मे रमते मनः' इति तस्मै परब्रह्मस्वरूपमुपदेष्टुकामेन कृष्णेन शिष्याचार्यसंवादरूपः कश्चन कल्पितेतिहासः प्रवर्तितः । तत्र 'कंचिद्ब्राह्मणमासीनमाचार्यं संशितव्रतम् । शिष्यः पप्रच्छ मेधावी किं स्वित्पर-

तरं तव’ इत्युपक्रम्य ‘कुतश्चाहं कुतश्च त्वं तत्सर्वं ब्रूहि यत्परम्। कुतो जातानि भूतानि स्थावराण्यवराण्यपि। केन जीवन्ति भूतानि तेषां स्यात्कुत्र वा लय’ इत्यादिना केचन प्रश्नाश्शिष्यकृता उपन्यस्ताः। तेषामुत्तरं वक्तुकामस्याचार्यस्य ‘ब्रह्म प्रोक्तमिदं धर्ममृषिप्रवरसेवितम्। वेदविद्यासमावाप्तं तत्वभूतार्थभावनम्। भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम्। सिद्धसंघपरिज्ञातं पुराकल्पं सनातनम्। प्रवक्ष्यामि महाप्राज्ञ पदमुत्तममद्य ते। बुद्ध्वा यदिह संसिद्धा भविष्यन्ति मनीषिणः।’ इति तदुत्तरोक्तिप्रतिज्ञामुपन्यस्य तत्र श्रोतुरत्यादरसिद्धये महर्षीणाञ्चतुर्मुखस्य च संवादरूपमत्र विषये महदुपाख्यानमाचार्येणोपदिष्टमिति तदुपाख्यानमुपक्रान्तम्। ‘उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम्। बृहस्पतिर्भरद्वाजो गौतमो नारदस्तथा। वसिष्ठः काश्यपश्चैव विश्वामित्रोऽत्रिरेव च। मार्गान् सर्वान् परिक्रम्य परिश्रान्ताः स्वकर्मभिः। ऋषिमांगिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः। ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम्। तं प्रणम्य महात्मानं सुखासीनं महर्षयः। पप्रच्छुर्विनयोपेता निःश्रेयसमिदं परम्’ इत्यादिना ऋषीणां प्रश्नानुपन्यस्य ब्रह्मणस्तदुत्तरवचनप्रपञ्चेन सपरिकरं परब्रह्मणः स्वरूपं निरूपितम्। तदवसाने ‘एतच्च सर्वमाख्यातं मया विप्रर्षिसत्तमाः। एवमाचरत क्षिप्रं ततस्सिद्धिमवाप्स्यथ। इत्युक्ता गुरुणा ते तु ब्रह्मणा मुनयस्तथा। कृतवन्तो महात्मानस्ततो लोकानवाप्नुवन्। त्वमप्येवं महाभाग यथोक्तं ब्रह्मणो वचः। सम्यगाचर शुद्धात्मा ततस्सिद्धिमवाप्स्यसि। इत्युक्तस्स तदा शिष्यो गुरुणा धर्ममुत्तमम्। चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान्। कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह। तत्पदं समनुप्राप्तो यत्र गत्वा न

शोचति । त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः । सम्यगाचर शुद्धात्मा ततस्सिद्धिमवाप्स्यसि इति’ बृहस्पत्यादिसंवादस्य गुरु-शिष्यसंवादस्यार्जुनं प्रति कृष्णवचनस्य समापनानन्तरं ‘को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन । श्रोतव्यं यन्मयैतद्वै तन्ममाचक्ष्व हे विभो ॥ इत्यर्जुनस्य प्रश्ने ‘अहं गुरुर्महाबाहो मनश्शिष्यं हि विद्धि मे । त्वत्प्रीत्या गुह्यमेतच्च कथितं वै धनंजय । मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह । अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत । ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन् कुरुनन्दन । सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् । पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते । मया तव महाबाहो तस्मादत्र मनः कुरु’ इति भगवता कृष्णेन गुरुशिष्यसंवादरूपेतिहासकल्पनाभिप्रायमाविष्कृत्य तदर्थ एव पूर्वमपि गीतोपदेशकाले प्रदर्शित इति तदैकार्थ्यं स्थिरीकृतम् । एवं च गीतासु ‘मुक्त्यर्थं शिवं प्रपन्नोऽहम’ इति कृष्णवचनात् स्वयं मुक्त्यर्थमन्यं प्रपन्नस्य गीतास्वेव तत्रतत्र कथं परभाववर्णनमिति शंकानिरासकादनुगीतासु ‘परं हि धर्मं कथितं योगयुक्तेन ते मया ।’ इति तद्वचनात् तदनन्तरं सिद्धपुरुषोपदिष्टस्सर्वोऽपि विरक्तिमार्गस्सम्यङ्मनसा समालोच्य बुद्ध्येदमित्थमिति निश्चित इत्येतदर्थद्योतकात् स्वबुद्धिमनस्समारोपितब्राह्मणदंपतिसंवादरूपेतिहासविषयात्तद्वचनात्तदनंतरं मया ब्रह्मस्वरूपं सम्यगालोच्य तद्ज्ञानांगकर्माण्यप्यनुष्ठाय तद्ज्ञानं लब्ध्वा सिद्धिः प्राप्तेत्येतदर्थद्योतकात् स्वात्मस्वीयमनस्समारोपितगुरुशिष्यसंवादरूपेतिहासविषयात्तद्वचनाच्च तस्य जीवभावनिश्चयात् जीव एव तस्मिन् ब्रह्माभिव्यक्तिविशेषकृतं क्वचित् क्वचित्तस्य ब्रह्मभाववर्णनमित्येव व्यवस्थांगीकरणीयेति युक्तम् ॥ २५ ॥

ननु, विष्णोः परब्रह्मभावे गीतावचनान्येव सर्वैः प्रमाणीक्रियन्ते। कथं तान्यपराणि स्युः। कथञ्च तासु किञ्चिद्वचनं तस्य मुक्त्यर्थमन्यप्रतिपत्तिं ब्रवीतीति वचश्श्रद्धेयमित्यनुशयं निरस्यति—

**योगारूढेन गीतास्विव परविषयं नानुगीतासु वाक्यं**
**कृष्णेनोक्तं ततस्तद्विषयमिव तदाभासते नैव तासु।**
**विष्णोराद्यस्य तासु क्वचिदपि महिमा वर्णितो यत्र दृष्ट-**
**स्तत्रैव व्यक्तमुक्तं कमलभुव इव ब्रह्मसृज्यत्वमस्य ॥ २६ ॥**

अयमर्थः। आपातदर्शिनां शिवयोगमास्थाय प्रवर्तितानि गीतावचनानि कृष्णस्यैव साक्षात्परभावप्रतिपादकानीव भासन्ते। अनुगीतावचनानि तु तेषामपि तथा न भासन्ते। किं तु काश्यपसिद्धपुरुषसंवादादिरूपेतिहासत्रयमात्रश्रवणेन यत्कृष्णेन प्रेप्सितं स्वरूपप्रमाणसाधनफलैस्सह श्रुतं मतञ्च ज्ञानार्थकर्मानुष्ठानेन सहोपासितञ्च तदन्यदेव कृष्णात् परं ब्रह्मेति प्रतीयते। अतो गीतावचनानामप्यत्रैव तात्पर्यं सर्वैरभ्युपगन्तव्यम्। अर्जुनेन गीतार्थ एव पुनः पृष्टेऽनुगीतावतरणात् अनुगीतावसाने अयमेवार्थस्तुभ्यं प्रागुपदिष्ट इत्युपसंहृतत्वाच्च। एवं च गीतासु परभावप्रतिपादनं क्वचित्क्वचिद्भगवद्विषयमिव क्वचित्क्वचिदन्यविषयमिव च स्फुरितम्। भगवतः पुनः पुनः स्वयं योगारूढत्वोपन्यासेनान्यविषयकोटेरुत्कटत्वेऽपि तत्तथा भगवन्मुखादेव विविच्यावगन्तव्यम्। तदर्थं तदा विविच्य प्रष्टुमवसरो नासीत्। तदिदानीं प्रष्टव्यम्। तस्य चागृहीतत्वोद्घाटनायामुपदेशायोग्यत्वधीः स्यात्। इत्याशयवतार्जुनेन निगृह्य युद्धारम्भव्यग्रेण चेतसा गृहीतत्वाद्विस्मृतं गीतार्थजातं पुनरुपदेष्टव्यमिति प्रश्नः

कृतः । तदाशयाभिज्ञेन च भगवता पूर्वमतिसूक्ष्मोऽर्थः समाधिमास्थायोपदेष्टव्य इति योगारूढेन मयोपदिष्टोऽर्थः त्वया मन्माहात्म्यश्रद्धावैकल्यात् मयि धूर्वहे जाग्रति किमपि वैयग्र्यं नास्थेयमिति अजानता स्वैनेव युद्धं निर्वहणीयमिति दुर्बुद्धिशालिना तत एव तद्वैयग्र्याक्रान्तमनसा नाञ्जसा गृहीतः । इदानीं योगमार्गं विसृज्याहम्भावासंवलितस्सोऽर्थ उपदिश्यत इति प्रतिज्ञाय सिद्धपुरुषकाश्यपसंवादाद्यवतरणेनाहंभावास्पृष्ट एव सोऽर्थ उपदिष्ट इत्यनुगीतावतरणाभिप्रायोऽवसीयते । नन्वनुगीतासु गीतास्विव यद्यपि कृष्णेन स्वस्य परभावो न प्रतिपादितः । तथापि गुरुशिष्यसंवादान्तर्गतैश्चतुर्मुखवचनैः 'सर्वेषामपि भूतानामहं ब्रह्ममयो महान् । भूतं परतरं मत्तो विष्णोर्वापि न विद्यते । राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीहि स विभुस्स प्रजापतिः । देवदानवभूतानां पिशाचोरगरक्षसाम् । नरकिन्नरमुख्यानां सर्वेषामीश्वरः प्रभुः । आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् । ततः परतरं नास्ति त्रिषु लोकेषु किञ्चने' त्येवंरूपैर्विष्णोः परब्रह्मभावः प्रतिपादितो दृश्यत इति चेन्न । तदीयवचनेषु 'ब्रह्ममय' इति मयटा विष्णोर्ब्रह्मसृज्यत्वस्यैव प्रतिपादनात् मयटस्तत्र नैरर्थक्यायोगेनार्थान्तरासंभवेन चतुर्मुखविषयब्रह्मसृज्यत्वपरब्रह्ममयशब्दप्रायपाठेन 'कुतश्चाहं कुतश्च त्वम्' इति समारोपितगुरुशिष्यभावकृष्णतदीयमनःसंवादरूपेतिहासोपक्रमगताशिष्यप्रश्नानुसारेण च विकारार्थत्वावश्यंभावात् तस्मादनुगीतासु नारायणादन्यदेव परं ब्रह्म प्रतिपाद्यमिति निश्चयात्तदनुरोधेन गीतासु कृष्णवचनानि तस्य परभावप्रतिपादकतयावभासमानानि योगारूढवचनत्वात् 'वृष्णीनां वासुदेवोऽस्मि' इति

कृष्णस्य नारदादिवत् विभूतिषु परिगणनलिंगाच्च ब्रह्माहंभावभावना-प्रयुक्तानि तद्व्यतिरिक्तब्रह्मपर्यवसयीनीति स्थिते तद्व्यतिरिक्तं ब्रह्म शिव एवेति पर्यवस्यति । महायोगेश्वरेण तेन प्रदर्शितस्य विश्वरूपविग्रहस्य प्रतिपादकेषु 'परमं रूपमैश्वरम्' इत्यादिवचनेष्वैश्वरत्वविशेषणेन विश्वरूपविग्रहप्रदर्शनसमये 'मयैवेते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति कृष्णेन स्वनिहतत्वेनोक्तानां रिपूणां पश्चात् स्वरूपमास्थायार्जुनेन संभाषमाणस्य तस्य वचनेषु 'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून् । अप्रमेयप्रभावं तं देवदेवमुमापतिम् । भजस्व नित्यं प्रयतो विश्वेशं हरमव्ययम्' । इति मोक्षधर्मपठितेषु शिवनिहतत्वप्रतिपादनात् उदाहृतवचनोपदिष्टप्रकारेणार्जुनस्य सर्वदा शिवभजनपरत्वेनैवावस्थानाच्च ॥ २६ ॥

ननु, 'तमेव चाद्यं पुरुषं प्रपद्य' इति गीतावचनस्य प्रतीतार्थो न ग्राह्यः । महाभारत एवाश्वमेधिके पर्वणि वैष्णवधर्मशास्त्रे विष्णुभक्तैरनुष्ठेयान् धर्मान् पृष्टवन्तं युधिष्ठिरं प्रति भगवता कृष्णेनैव यावत्पृष्टवैष्णवधर्मोपदेशानन्तरम् 'अनाश्रित्योच्छ्रयो नास्ति मुख्यमाश्रयमाश्रयेत् । रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो राजन्नाहं कश्चिदुपाश्रित' इति स्वस्यान्यभजनाभावस्योपदिष्टत्वादित्याशंक्याह—

**नाहं कश्चिद्भजामीत्यभिहितममुना यत्तु धर्मात्मजाय**
**प्राचीं तस्यात्मभक्तिं प्रथयतुमनसोऽमुष्य सात्मप्रशंसा ।**
**तस्मिन् संवाद एवं ह्यभिहितममुना शंभुभक्तेः स्वभक्त्या**
**साम्यं सर्वत्र तत्त्वं पुनरनुसरता वर्णितश्चाधिकत्वम् ॥ २७ ॥**

वैष्णवधर्मशास्त्रे त्वद्भक्ताय मह्यं त्वद्धर्मविशेषा उपदेष्टव्या इति पुनः पुनः पृष्टवन्तं युधिष्ठिरं प्रति भगवता वैष्णवधर्मा उपदिष्टाः । ततः प्रभृति 'न बुद्धिभेदं जनयेत्' इति न्यायेन तस्य प्राक्सिद्धां स्वस्मिन् भक्तिमधिकां कर्तुमित्थमात्मप्रशंसा कृतेति प्रशंसारूपोऽयं 'मुख्यमाश्रयमाश्रयेत्' इति विधेः स्वाश्रयपर्यवसायित्वं सूचयितुमयमर्थवादः । यतस्तस्मिन्नेव भगवद्युधिष्ठिरसंवादरूपे वैष्णवधर्मशास्त्रे युधिष्ठिरेण वैष्णवधर्मेष्वेव पुनः पुनः पृच्छ्यमानेष्वपि तैस्सह शैवधर्मा अपि तुल्यविकल्पतया तुल्यफलतया च दर्शिताः । यथा 'निवेशयति मन्मूर्त्या आत्मानं मां ततश्शुचिः । रुद्रं दक्षिणमूर्त्या वा चतुर्दश्यां विशेषतः । सिद्धैः ब्रह्मर्षिभिश्चैव देवलोकैश्च पूजितः । गन्धर्वैर्भूतसंघैश्च गीयमानो महातपाः । प्रविशेत् स महातेजा मां वा शंकरमेव वा । न स्यात्पुनर्भवो राजन्नात्र कार्या विचारणा । विषुवे स्नपनं यस्तु मम कुर्याद्धरस्य वा । अर्चनञ्च यथान्यायं तस्य पुण्यफलं शृणु । दशजन्मकृतं पापं तस्य सद्यो विनश्यति । दशानामश्वमेधानामिष्टानां लभते फलम् । विमानं दिव्यमारूढः कामरूपी यथासुखम् । दिव्यवर्षसहस्राणां कोटिमेकां तु मोदते । ततश्चापि च्युतः कालादिह लोके द्विजोत्तमः । चतुर्णामपि वेदानां पारगो वेदविद्भवेत् । चन्द्रसूर्यग्रहे धाम्नि मम वा शंकरस्य वा । गायत्रीं मामिकां वापि जपेद्यः शंकरस्य वा । शंखतूर्यनिनादैश्च कांस्यघण्टास्वनैरपि । कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु । एकादश्यामुपोष्याथ द्वादश्यामर्चयेत्तु माम् । विप्रानपि यथालाभं पूजयेद्भक्तिमान्नरः । स गच्छेद्दक्षिणामूर्तिं मां वा नात्र विचारणा' इति । एवं सर्वत्र स्वभजनशिवभजनयोस्साम्यं वर्णितवतापि पुनर्वे-

स्तुतत्त्वमनुसरता तत्रैव शिवभजनस्याधिक्यमप्युक्तम् । तत्र हि 'विशेषतीर्थं सर्वेषामशक्तानामनुग्रहात् । भक्तानां तारणार्थं वै वक्तुमर्हसि धर्मत' इति साक्षाद्भगवत्सेवां कर्तुमशक्तानां भक्तानां तदनुकल्पतया सेवनीयं तीर्थं किमिति प्रश्ने 'सत्यं हि वचनं तीर्थमहिंसा तीर्थमुच्यते । तपस्तीर्थं दया तीर्थं शीलं तीर्थं युधिष्ठिर । मद्भक्तस्सकलं तीर्थं शंकरस्य विशेषतः ।' इति स्वभक्तापेक्षया शिवभक्तस्य विष्णुभक्तान्प्रत्यधिकतीर्थत्वमुक्तम् । एवंविधोपक्रमविरोधादौपसंहारिकं तद्वचनं स्वभक्तप्ररोचनार्थमर्थवादतया नेतव्यमिति न तद्विरोधः 'तमेव चाद्यं पुरुषं प्रपद्य' इति वचनेन गणनीय इति भावः ॥ २७ ॥

एवं गीतानुगीतादिपर्यालोचनया उक्तव्यवस्थांगीकरणीयेत्युपपादितम् । अथ विष्णुपुराणपर्यालोचनयापि सांगीकरणीयेत्युपपादयति—

**'विष्णोरुत्कर्षमेव प्रथयति बहुधा भक्तिसिद्ध्यै यदस्मि-**
**न्नुत्कर्षं शंकरस्य स्थगयति कथया तत्र तत्र प्रसक्तम् ।**
**तस्मिन्नप्यर्थतत्वं किमपि गमयितुं वैष्णवाख्ये पुराणे**
**ब्रह्मानन्तर्यमस्याभिहितमिति ततोऽप्येवमेव व्यवस्था ॥ २८ ॥**

विष्णुपुराणे विष्णोरेवोत्कर्षः प्रतिपादितश्शिवस्योत्कर्षस्तत्तत्कथाप्रसंगेन वर्णनीयतया प्रसक्तोऽपि विष्णावैकान्तिकभक्तिसिद्ध्यै स्थगितः । न हि यथा भागवतादिष्वमृतमथनकथाप्रसक्तं कालकूटसंहरणं सर्गवर्णनाप्रसक्तं दक्षाध्वरध्वंसनमित्येवमादि वर्णितं कालकूटज्वालाश्रान्तानां शिवं शरणं प्रपन्नानां देवानां 'न ते गिरित्राखिललोकपाल

विरिञ्चिवैकुण्ठसुरेन्द्रमृग्यम् । ज्योतिः परं यत्र रजस्तमश्च सत्वं न यद्ब्रह्म निरस्तभेदम्' इत्यादिवचनैश्शिवस्य ब्रह्मविष्ण्वाद्यपरिच्छेद्यपरब्रह्मभावरूपो महिमा वर्णितः । दक्षाध्वरध्वंसे च 'नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्वम् । विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य क उद्बिधित्से' त्यादिभिः पितामहादिवचनैस्तस्य तथाभूतमहिमाविष्कृतः । एवं न हि विष्णुपुराणे क्वचिदपि शिवमहिमा प्रख्यापितोऽस्ति । किं त्वमृतमथनादिप्रसंगे सत्यपि काळकूटसंहरणादिकथांशत्यागेन तस्य महिमा निगूहितः । एवंभूतेऽपि विष्णुपुराणे क्वचिद्वस्तुतत्वं किञ्चित्प्रकाशनीयम् । अन्यथा विष्णुभक्तिसिद्धौ सर्वथा तत्वार्थनिगूहने कृते तत्परवेदोपबृंहणता न स्यादित्यभिप्रेत्य प्रथमांशावसाने पुराणप्रतिपाद्यं महाविष्णुं प्रस्तुत्य 'स परस्सर्वशक्तीनां ब्रह्मणस्समनन्तरः' इति ब्रह्मविभूतिभूतसर्वजीवापेक्षया महाविष्णुः पर इत्युक्तत्वादेव परब्रह्मणस्त्वयं कनीयानिति तस्य ब्रह्मकोटिबहिर्भावेन प्रथमजीवभावो दर्शितः । प्रदेशान्तरेषु तस्य परभावो वर्णित इत्युभयाविरोधार्थं जीवरूप एव तस्मिन्परब्रह्माभिव्यक्तिविशेषात् परब्रह्मभाववर्णनमित्युक्तव्यवस्थावश्यमङ्गीकरणीयेत्यर्थः ॥ २८ ॥

अथ बहुषु पुराणेष्वेवं विष्णोरेव चतुर्मुखभावप्रतिपादनात् चतुर्मुखस्य जीवत्वसंप्रतिपत्तेस्तस्य जीवत्वमभ्युपगन्तव्यमित्युपपादयति—

**जीवस्तावत्प्रसिद्धस्सरसिरुहभवस्सृज्यसंहार्यतादे-**
**राम्नाये धर्मशास्त्रे स हरिरिति पुराणेषु चातिप्रसिद्धम् ।**
**कुर्वन्वाराहकल्पे द्रुहिणकृतिमतस्सोच्यते तस्य नाम्ने-**
**त्युक्तिर्भ्रान्तस्य कल्पान्तरविषयपुराणेष्वपि ह्येवमुक्तम् ॥२९॥**

विरिञ्चस्तावत् जीवः सृज्यत्वसंहार्यत्वादिश्रवणादिति विष्णुब्रह्मवादिभिरप्यभ्युपगम्यते । विरिञ्च एव विष्णुरिति श्रुतिस्मृतिपुराणेष्ववगतम् । तथा हि—यजुस्संहितायां तावत् 'आपो वा इदमग्रे सलिलमासीत्तस्मिन् प्रजापतिर्वायुर्भूत्वाचरत् स इमामपश्यत्तां वराहो भूत्वाहरत्तां विश्वकर्मा भूत्वा व्यमार्ट्' इति प्रजापतिशब्दोक्तस्य विरिञ्चस्यैव वराहभावापत्तिः पुनस्तस्यैव विश्वनिर्मातृविरिञ्चभावापत्तिश्च श्रूयते । एवमाधानमन्त्रेष्वपि 'यस्य रूपं बिभ्रती मामविंदत् । गुहां प्रविष्टां सरिरस्य मध्ये । तस्येदं विहतमारभन्तोऽच्छंबट्कारमस्यां विधेम' इति वराहविहितसंभरणमन्त्रे विरिञ्चस्य वराहरूपग्रहणं श्रूयते । यद्यपि तस्मिन्मन्त्रे तत्र कर्तृनिर्देशो नास्ति । तथापि प्रजापतिसृष्टानां प्रजानामिति पूर्वमन्त्रे प्रजापतिशब्दोक्तो विरिंच एव गृह्यते । कर्त्रपेक्षायां सन्निहितग्रहणौचित्यात् 'आपो वा इदमग्रे सलिलमासीत्तेन प्रजापतिरश्राम्यत्कथमिदं स्यादिति सोऽपश्यत् पुष्करपर्णमतिष्ठत् सोऽमन्यत अस्ति वैतद्यस्मिन्निदमधितिष्ठतीति स वराहो रूपं कृत्वोपन्यमज्जत् स पृथिवीमधाच्छेत् तस्या उपहृत्योदमज्जत्' इति तद्ब्राह्मणवाक्यानुरोधाच्च । वराहरूपं वैष्णवमित्यसन्दिग्धम् । 'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति श्रवणात्सकलपुराणैककण्ठ्याच्च । तथा मानवे धर्मशास्त्रे 'ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः । सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । आपो नारा इति प्रोक्तास्तेन नारायणः स्मृतः ॥' इति नारायणस्य स्वयमेव विरिञ्चरूपेण जनिरुक्ता । पुराणे-

ष्वपि स्कान्दे सूतसंहितायां विष्णोर्वराहावतारकृत्यमुक्त्वा 'वाराहं रूपमुत्सृज्य स्वयं ब्रह्माभवद्धरिः' इति तस्यैव ब्रह्मभावापत्तिरुक्ता। विष्णुपुराणे च 'एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः । भोगिशय्यागतश्शेते त्रैलोक्यग्रासबृंहितः । जलस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः ।' इति कमलसम्भवस्य विरिञ्चस्यैव नारायणात्मना समुद्रशायित्वमुक्तम् । कूर्मपुराणेऽपि 'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः । सुष्वाप योगशयन एकीभूतोऽथ विष्णुना ।' इति तस्य देहान्तरोपाधिकभेदमपहाय विष्णुनैकीभूय समुद्रशयनमुक्तम् । एवमन्येष्वपि बहुषु पुराणेष्वयमर्थो वर्ण्यते। विस्तरभयान्नेह लिख्यते । अत्र कश्चिदाह— वाराहकल्पे स्वयमेव भगवान् ब्रह्मकृत्यं जगत्सृष्ट्यादिकं करोति तद्विषयाण्येतानि पुराणादिवचनानीति । तत्तुच्छम्। लक्ष्मीकल्पादिवृत्तान्तप्रतिपादकेषु पुराणेषु कूर्मपुराणादिष्वपि तथा श्रवणात् । वराहकल्पमधिकृत्य प्रवृत्ते विष्णुपुराणेऽपि कल्पादिकालमारभ्य वाराहकल्पवृत्तान्तं वर्णयितुं तदुपोद्घाततया पाद्मकल्पवृत्तान्तवर्णनावसर एव 'एकार्णवे तु त्रैलोक्य' इत्यादिश्रवणात् वाराहकल्पविषयेऽपि तस्मिन्पुराणे पुराणान्तरेष्विव ब्रह्मण एव सकलसृष्टिकर्तृत्वप्रतिपादनाच्च । अतस्सम्प्रतिपन्नजीवभावविरिञ्चाभेदादपि विष्णोर्जीवत्वमवश्यमङ्गीकरणीयमिति भावः ॥ २९. ॥

ननु, यथा संप्रतिपन्नजीवभावात् संहाररुद्रात् अन्यः परमशिव इत्यभ्युपगम्यते, तथा पालनाधिकृतात् जीवरूपाद्विष्णोरन्यः पराशक्त्यंश आदिनारायण इत्यभ्युपगम्यताम् । सर्वमविरोधेनोपपद्यत इत्याशंक्याह—

शंभोस्संहाररुद्रादिव भुवनपतेरादिनारायणस्य
स्वीकारे भिन्नताया भवति सुघटिता ब्रह्मशक्त्यंशतास्य ।
तत्स्वीकारे प्रमाणं न तु किमपि दरीदृश्यते निर्विशंकं
शंभोश्शैवेष्विवास्य क्वचिदपि गुणितो नान्यतोक्तिः पुराणे ॥

अभ्युपगच्छेम तथा यदि तत्रानन्यथासिद्धं किञ्चित्प्रमाणं दृश्येत । न तु तद्दृश्यते । न हि शैवपुराणेष्वैकमत्येन गुणिरुद्रात्परमशिवस्य भेद इव गुणिविष्णोरादिनारायणस्य भेदो वैष्णवपुराणे क्वचिदुक्तोऽस्तीत्यर्थः ॥ ३० ॥

ननु बृहन्नारदीयोपपुराणे ब्रह्मविष्णुरुद्रास्त्रयोऽपि नारायणेन सृष्टा इति क्वचित् क्वचित् लिखितमस्ति । एतादृशमिह प्रमाणं भवेदित्याशंक्याह—

यत्र क्वाप्यस्ति चेत्सा प्रमथकुलपतेरब्जयोनेर्यथैवं
स्वव्यूहापेक्षया स्यान्न तु परगुणमूर्त्युत्तरत्वे प्रमाणम् ।
न ह्यस्त्यस्यादिशंभोरिव परगुणिनः स्वस्य सृष्ट्यादिकर्तृ-
व्यूहैर्युक्तास्त्रयोऽपि क्वचिदपि कथिताः सन्ति शेषा इतीदम् ॥

शिवस्य रुद्रविष्णुचतुर्मुखा इव तेषामपि सन्ति व्यूहाः जगतां हरणभरणोत्पादनेष्वधिकृताः वायुसंहितादिप्रसिद्धाः ब्रह्मणो विराट्कालपुरुषाख्याः त्रयः विष्णोस्संकर्षणप्रद्युम्नानिरुद्धाख्यास्त्रयः रुद्रस्य हरमृडभवाख्याः । एते च दक्षमन्वन्तकादिवत् सृष्ट्यादिष्ववान्तराधिकारिणः । एवञ्च विष्णोस्त्रिमूर्तिपरत्ववचनानि स्वव्यूहत्रयपराण्युपपद्यन्ते । तद्व्यूहानामपि सृष्ट्याद्यधिकारसाम्यात् ब्रह्मादिव्यपदेशोपपत्तेः । 'एका भागवती मूर्तिर्ज्ञानरूपा शिवामला । वासुदेवाभिधाना सा

गुणातीता सुनिष्कळा । द्वितीया रुद्रसंज्ञा स्यात्तामसी शेषसंज्ञिता । विहन्ति सकलञ्चान्या वैष्णवी परमा तनुः । सत्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता । जगत्स्थापयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा । चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति संज्ञिता । राजसी चानिरुद्धाख्या पुरुषसृष्टिकारिका' इति तेषां तद्व्यपदेशदर्शनाच्च । एवं ब्रह्मणस्त्रिमूर्तिपरत्ववचनानामपि गतिरुन्नेया । वायुसंहितायां तदाण्डेऽस्मिन्विवृद्धोऽभूत्क्षेत्रज्ञो ब्रह्मसंज्ञित' इति ब्रह्माणं प्रस्तुत्य 'त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्तते । सृजते ग्रसते चैव रक्षते च त्रिभिः स्वयम् ।' इत्यादिना तद्व्यूहान् प्रदर्श्य 'सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च तमो रजः । विष्णुत्वे केवलं सत्त्वं गुणमूर्त्तिस्त्रिधा विभोः' इति तेषां गुणविभागश्लोके तेष्वपि ब्रह्मादिशब्दप्रयोगाच्च । ननु तर्ह्येवमेव शिवस्य त्रिमूर्तिपरत्ववचनान्यपि संहाररुद्रव्यूहभूतभवमृडहरपराणि स्युरिति संहाररुद्रात् भिन्नः परमशिवो न सिद्ध्येदिति चेत् सिद्ध्येदेव। 'सृजत्यशेषमीशस्य शासनाच्चतुराननः । तिसृभिर्मूर्तिभिश्चैव पाति चान्ते निहन्ति च । विष्णुः पालयते विश्वं विश्वयोनेर्नियोगतः । सृजते ग्रसते चापि त्रिधा भिन्नस्तु रक्षति' इति शिवपुराणे स्वस्वव्यूहसहितानां ब्रह्मविष्णुरुद्राणां शिवनियोगेन स्वस्वकृत्ये प्रवृत्त्युपन्यासात् तत्रैव योगेश्वराख्यपूजादिषु स्वस्वव्यूहावरणानां तेषां शिवावरणत्वेन पूजाविधानात्तदनन्तरं पञ्चावरणस्तोत्रे स्वस्वव्यूहावरणानां तेषां शिवावरणनिविष्टतया स्तोत्रदर्शनात् कूर्मपुराणे 'सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः । प्रधानास्संस्मृता देवाश्शक्तयः परमात्मनः । आभ्यः परस्तात् भगवान् परमात्मा सनातनः । गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ।' इति प्रधानभूतेभ्य एव ब्रह्मविष्णुरुद्रेभ्यः परमशिवस्य परत्वप्रतिपादनाच्च ।

अस्मिन्नर्थे साधकानि वचनानि सर्वेष्वपि शैवपुराणेषु सन्ति भूयांसि। तानि प्रायश्शिवतत्त्वविवेकादिषु लिखितानि विस्तरभयान्नेह पुनर्लिख्यन्ते। एवं ब्रह्मविष्णुरुद्रास्त्रयोऽपि स्वस्वव्यूहत्रयसहिताश्शेषभूता इति क्वचिदपि वैष्णवपुराणेषु न श्रुतं प्रत्युत भागवतादिषु प्रतिपाद्यस्य विष्णोः सात्विकतया राजसतामसाभ्यां ब्रह्मरुद्राभ्यामुत्कर्षप्रतिपादनेन त्रिमूर्त्यन्तर्गत एव विष्णुर्वैष्णवपुराणेपु पतिपादित इति विभावितं दृश्यत इति भावः ।॥ ३१ ॥

एवमुक्तप्रमाणैः प्राप्तं विष्णोः ब्रह्मत्वं प्रत्याख्येयमिति शक्तेर्ब्रह्मकोट्यन्तर्भावे तदंशत्वं विष्णोर्न घटत इति शंका सप्तभिः श्लोकैरुपपादिता । अत्र भट्टभास्करमतानुसारिणां समाधानमाह—

**अत्रैके वर्णयन्ति द्रुहिणगिरिशवज्जीवभावोऽस्तु विष्णो-**
**श्चिच्छक्त्यंशत्त्वमस्य व्यपनयति ततो नोद्भवन्कोऽपि दोषः ।**
**षट्त्रिंशत्तत्त्ववर्गो भवति जडतयात्यन्तवैरूप्यशली**
**सोऽप्यंशः खल्वमुष्याः किमिति खलु भजेच्चेतनो नांशभावम् ॥**

विष्णोर्जीवत्वं शक्त्यंशत्वमित्युभयमप्यस्तु, न कोपि दोषः । न च शक्त्यंशस्य जीवत्वे शक्तेर्ब्रह्मकोट्यन्तर्भावविरोधः । अचिद्रूपो हि शिवतत्त्वादिर्भूम्यन्तः षट्त्रिंशत्तत्त्ववर्ग चिद्रूपायाश्शक्तेरंशोऽभ्युपगम्यते । तदुपपादनार्थमेव खलु 'न विलक्षणत्वा' धिकरणम् । तथैव शक्तेर्ब्रह्मकोटित्वेऽपि विष्णोर्जीवस्य तदंशत्वमुपपद्यत इति न कश्चिद्विरोध इत्यर्थः ॥ ३२ ॥

नन्वनया रीत्या सर्वेषामपि जीवानां शक्त्यंशताभ्युपगम्यताम् । किमर्धजरतीयन्यायेनेत्याशंक्य तथैवाभ्युपगम्यत इत्याह—

**जीवास्सर्वे तदंशाः स्युरिति यदि तथैवास्तु का नः क्षतिः स्यात्**
**कार्यत्वं नास्ति तेषामिति न तदकृताभ्यागमादिप्रसक्तिः ।**
**इष्यन्ते ह्यञ्जसास्य प्रतिभवनियतानाद्यवस्थांशभेदाः**
**कार्यत्वं वास्तु तेषां भवविहतिभयाद्युज्यतेऽनादितापि ॥३३॥**

सर्वेषां जीवानां शिवशक्त्यंशत्वाभ्युपगमेऽपि नास्ति कश्चिद्दोषः । न च तथा सति तत्त्ववर्गवत् कार्यत्वापत्तेरकृताभ्यागमरूपोऽतिप्रसङ्गः स्यादिति वाच्यम् । अकार्यांशत्वाभ्युपगमोपपत्तेः । न चांशानां कार्यत्वनियमः । मलद्रव्यस्याविद्याञ्जनादिशब्दितस्य सर्वेषां जीवानामावरणार्थमभ्युपगतस्यैकत्वेन कस्यचिज्जीवस्य मुक्तौ तन्निवृत्त्या सर्वेषां जीवानामपि मुक्तिप्रसंगपरिहाराय तत्तज्जीवावारकत्वेनाभ्युपगतानामवस्थाविशेषरूपाणामंशानामकार्यत्वसंप्रतिपत्तेः । अथवा शक्त्यंशरूपाणां जीवानां कार्यत्वमेवास्तु । कार्यत्वेऽपि मुक्तिवदनाद्यन्तत्वमुपपद्यत इत्यर्थः ॥ ३३ ॥

मुक्तिदृष्टान्तमुपपादयति—

**जन्मस्थित्यादिरीत्या भवविहतिरपि स्यादनादिप्रवाहा-**
**ज्जीवानन्त्येन नेदंप्रथमभवतया कालभेदे नियम्या ।**
**तस्मात्प्राक्कोटिदृष्ट्या नियतविहनिरप्यप्रीताकारभावा**
**सा तत्त्वज्ञानसाध्या भवति भवति चानादिरित्यभ्युपेयम् ३४**

यथा खल्वनादौ संसारे चेतनाचेतनकरंबितस्यास्य प्रपञ्चस्य जन्मस्थितिभंगाः अनादिप्रवाहतयानुवर्त्तन्ते तथा मुमुक्षूणां तत्त्वज्ञानसाद्ध्या मुक्तिरप्यनुवर्त्तत इत्यभ्युपेयम् । न तु कश्चित्कल्पमारभ्येदंप्रथमतया प्रवृत्तेत्यभ्युपगन्तुमुचितम् । तत्र नियामकाभा-

वात् । ‘ तद्यो देवानां प्रत्यबुध्यत तथा ऋषीणां तथा मनुष्याणाम् ’ इति देवर्षिमनुष्येषु प्राङ्मुक्ताः केचिदासन्निति प्रतिपादयन्त्याः श्रुतेरतीतेष्वनन्तेषु कालेषु सर्वेष्वेकरूपत्वाच्च । एवञ्च प्राङ्मुक्तानां मध्ये केषाञ्चिन्मुक्तिः प्राक्कोटिदृष्टिरहितेत्यप्यंगीकर्तव्यम् । अन्यथा सर्वेषामपि मुक्तेः कालविशेषमारभ्य प्रवृत्तत्वेन ततःपूर्वं कस्यापि मुक्तिर्नासीदिति तत्प्रवाहानादित्वभंगप्रसंगात् ततःपूर्वं ‘तद्यो देवानां प्रत्यबुध्यत’ इत्यादिश्रुतेरर्थशून्यत्वभंगप्रसंगाच्च । एवञ्चेतः प्राङ्मुक्तानां मध्ये केषाञ्चिन्मुक्तेः प्राक्कोटिदर्शनं केनापि प्रमाणेन भवन्नास्तीति सा तत्त्वज्ञानसाध्या भवति चानाद्यनन्तेत्यकामेनापि अङ्गीकरणीयम् । इत्थमेव जीवरूपाणां शक्त्यंशानां कार्यत्वेऽनाद्यन्तत्वमुपपद्यत इति न कृतहानिरकृताभ्यागमो वा प्रसज्यत इत्यर्थः ॥ ३४ ॥

इत्थं विष्णुर्जीव इति पक्षः केषाञ्चिदुपपादितः । अथ स्वसिद्धान्तं दर्शयति—

**आस्माकीना तु सैद्धान्तिकसरणिरियं यत्परब्रह्मकोटिः**
**श्रीमान्नारायणस्सन्महित इति महाभारतादिप्रसिद्धः ।**
**तस्मात्तेष्वादिशंभुः क्वचिदपि विषये वर्णितो नापकृष्टः**
**किंतु स्थाणुर्विशालाक्ष इति समुदितो लोकसंहर्तुरीशः ॥३५॥**

वेदविभागार्थमेवावतीर्णेन सकलवेदतात्पर्याभिज्ञेन सर्वज्ञशिखामणिना भगवता वेदव्यासेन पुलस्त्यवरदानलब्धदेवतापारमार्थ्यवेदनेन श्रीपराशरेणान्यैश्च महर्षिभिर्वेदोपबृह्मणार्थं प्रणीतेषु श्रीमहाभारतविष्णुपुराणादिषु निश्चितपरब्रह्मभावस्य सद्भिः सर्वैरप्यविभागेन

परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित्कोणे निविष्टमन्त्रार्थवादपुराणवचनादिलेशमवलब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते । तथा चेन्मूर्द्धा च शतधा भवति । वेदवैदिकद्रोहो देवताद्रोहश्च जायते । अतो नारायणः परब्रह्मकोटिरित्येवास्माकं सिद्धान्तः । ननु भारतादिषु शिवस्य नारायणात् क्वचित्क्वचिदपकर्षः प्रतिपादितोऽस्तीति सोऽप्यादरणीयः स्यादिति चेदाद्रियत एव । न हि तेषु त्रिमूर्त्युत्तीर्णं परमशिवं शृङ्गग्राहिकया निर्दिश्य तस्य नारायणादपकर्षः क्वचिदुक्तोऽस्ति। सामान्यवचनानि तु संहाररुद्रतदंशविषयतया चरितार्थानि। अस्ति हि संहाररुद्रस्य चतुर्मुखान्नारायणाच्चापकर्षः कल्पभेदप्रवृत्तः । स एव तदीयेषु पुराणेषु तदनुसारिषु भारतप्रदेशादिषु च वर्णितः । यथाह भगवान्वायुः—‘त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सृष्टिस्थित्यन्तहेतवः । पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु । ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः । तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसा तोषयित्वा तं पितरं परमेश्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवान् रुद्रं ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणञ्च पुनर्भवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिगम्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥’ इति । ‘तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति । अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥’ इति च । एवं शिवस्य विष्णोश्चतुर्मुखाच्चापकर्षवचनानि कानिचित् संहाररु-

द्रस्य कादाचित्कापकर्षविषयाणि। प्रायेणैषु भारतादिषु दृष्टानि तु तथा-भूतानि वचनानि विष्णुचतुर्मुखाविर्भूतसंहाररुद्रांशविषयाणि । सन्ति हि प्रत्यवान्तरकल्पं सृष्ट्यभिवृद्ध्यादिना लोकानुग्रहाय विष्णोश्च-तुर्मुखाच्चाविर्भूताः महाकल्पादौ ताभ्यां सह परमशिवादुत्पन्नस्य संहा-ररुद्रस्यांशविशेषाः । यद्विषयाणि पुराणभारतवचनान्युपलभ्यन्ते । यथा सूतसंहितायाम्— तताप परमं घोरं ततो विप्राश्चतुर्मुखः । सृष्ट्यर्थं ब्रह्मणस्तस्य भ्रुवोर्घ्राणस्य मध्यतः। अविमुक्ताभिधाद्देशात् स्वकीयात्तु विशेषतः। त्रिमूर्तीनां महेशस्य द्विजा वेदान्तवित्तमाः । अंशभूतो महादेवः सर्वदेवनमस्कृतः। अर्धनारीश्वरो भूत्वा प्रादुरा-सीत्कृपानिधिः॥' इति। वायुसंहितायां 'निर्दिष्टः परमेशेन महेशो नील-लोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुजः।' इति । लिंग-पुराणे 'तस्य हृत्कमलस्थस्य नियोगादंशजो विभोः । ललाटं तस्य निर्भिद्य प्रादुरासीत्प्रभोर्महान्॥' इति । अंशः परमशिवस्य संहाररुद्र-स्ततो जातस्तदंशभूत इत्यर्थः । 'अनादिनिधनो देवश्चैतन्यादिस-मन्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः । अणिमादि-गुणोपेतमैश्वर्यं न च कृत्रिमम् । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः ।' इति महाभारतवचनमप्युदाहृतपुराणवचनानुसारेण संहाररु-द्रांशाविर्भावपरम्। एवम् 'अथ पुनरेव नारायणस्सोऽन्यत्कामो मनसा-ध्यायत। तस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षश्शूलपाणिः पुरुषोऽजायत बिभ्रत्सत्यं ब्रह्मचर्यं तप' इत्यादिश्रुतिप्रतिपादितश्शिवस्य नारायणा-दाविर्भावोऽपि संहाररुद्रांशाविर्भावरूपः । महाभारते 'ततः पार्श्वे वृषा-ङ्कस्य ब्रह्मचारी व्यतिष्ठत। पिंगाक्षस्तपसा श्रेष्ठो बलवान्नीललोहितः॥' इति तस्य कैलासे श्रीकण्ठपार्श्वेऽवस्थानोक्त्या कूर्मपुराणे नारायणं प्रति

'अहञ्च भवतो वक्त्रात् कल्पान्ते घोररूपधृत् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥' इति संहाररुद्रोक्त्या चैच्छिकतदंशावतारत्वाविष्करणात् । एवंभूतविशेषांशविषयाण्येव 'ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ।' इत्यादीनि प्रागुदाहृतानि वायुसंहितावचनानि । एवंभूतसंहाररुद्रांशविषयत्वं भारतादिषु दृष्टानां रुद्रस्य चतुर्मुखान्नारायणाच्चापकर्षवचनानां तत्तद्वचनेष्वेव प्रायश्श्रूयमाणैः स्थाणुविशालाक्षादिशब्दैराविष्क्रियते । यथा महाभारते— 'ब्रह्मा सुरगुरुः स्थाणुर्मनुश्च परमेष्ठिजः ।' इत्यादौ 'ब्रह्मा स्थाणुर्मनुर्दक्षः' इत्यादौ च 'एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः । तस्य देवस्य मर्यादां पूजयन्ति सनातनीम्' इति नारायणकृतमर्यादापरिपालकत्वेनोक्तानां प्रजापतीनां परिगणने । यथा च तत्रैव सुन्दोपसुन्दाख्याने 'तत्र विष्णुर्महादेवस्तत्राग्निर्वायुना सह' इत्यारभ्य 'ऋषयस्सर्व एवैते पितामहमुपासत' इत्यन्तेन विष्ण्वादिसकलदेवतानामृष्यादीनाञ्च पितामहमुपासीनानां तत्सभास्थितिवर्णनानन्तरम् 'इन्द्रः स्थाणुश्च भगवान्धैर्यं त्यक्त्वा प्रतिष्ठितौ' इति 'एवञ्चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरा' इति सुन्दोपसुन्दवधार्थं पितामहेन । सृष्टायास्तिलोत्तमाया दर्शनलोभेन रुद्रस्य परितोमुखचतुष्टयकीर्तने यथा वा मृत्युसम्भवोपाख्याने 'ततो हरो जटी स्थाणुः' इति रुद्रं प्रस्तुत्य तस्य ब्रह्माणं प्रति 'भवता हि नियुक्तोऽहं प्रजानां परिपालन' इति स्वस्य तन्नियुक्तत्वोपन्यासे । एवमादिस्थलेषु स्थाणुशब्दग्रहणेन रुद्रविभूतिविशेषरूपत्वं ख्याप्यते । 'स्वात्मजैरेव तैरुद्रैर्निवृत्तात्मा व्यतिष्ठत । स्थाणुत्वं तस्य तेनासीद्देवदेवस्य शूलिन' इति कौर्मे, 'ततः प्रभृति देवोऽसौ न प्रसूते शुभाः प्रजाः । ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम्' इति वायुसंहितायां, 'ततः

प्रभृति विश्वात्मा न प्रसूते शिवाः प्रजाः । स्थाणुवन्निश्चलो यस्मात् स्थितः स्थाणुरतः स्मृत' इत्यादित्यपुराणे च ब्रह्माङ्गभुवं तेन 'प्रजाः सृज' इति निर्दिष्टं स्वसमानगुणाकृत्युपेतान् जननमरणहीनानसंख्यातान् रुद्रान् सृष्टवन्तं 'एवंभूताः प्रजा मा स्राक्षीः' इति ब्रह्मवचनेन सृष्टिव्यापारान्निवृत्तं रुद्रं प्रस्तुत्य तेनैव प्रवृत्तिनिमित्तेन स्थाणुशब्दस्य तन्नामत्वप्रतिपादनात् । महाभारतेऽपि भीष्मपर्वणि सभापर्वणि च 'यत्र भूतपतिः सृष्ट्वा सर्वलोकान् सनातनः । उपास्यते तिग्मतेजा वृतो भूतैस्सहस्रशः ॥' इति मैनाकपर्वते उपास्यस्य शिवस्य सन्निधानमुक्त्वा 'नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः । उपासते यत्र परं सहस्रयुगपर्यये ॥' इति तदुपासकपरिगणनपरे अनन्तरश्लोके राजधर्मे 'भूयस्स भगवान् ध्यात्वा चिरं शूलवरायुधः । तस्य तस्य निकायस्य चकारैकैकमीश्वरम् । देवानामीश्वरञ्चक्रे देवं दशशतेक्षणम् । यमं वैवस्वतञ्चैव पितॄणामकरोत्पतिम् ।' इत्युपक्रम्य 'रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः । महात्मानं महादेवं विशालाक्षं सनातनम्' इति शिवनियम्येषु परिगणनेन च स्थाणुशब्दितस्य रुद्रस्य विभूतिरुद्रत्वस्फुटीकरणाच्च । राजधर्मे विशालाक्षशब्देन स्थाणुरेवोच्यते । तत्रैव प्रदेशान्तरे ब्रह्मप्रणीतां नीतिं प्रस्तुत्य 'ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः । बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ।' इति तत्र तस्य दृष्टप्रयोगत्वात् । 'स देवः सर्वभूतात्मा महादेवस्सनातनः । असंख्यातं सहस्राणां रुद्राणां स्थानमव्ययम् । युगानामायुषो ह्रासं विज्ञाय भगवान् शिवः । सञ्चिक्षेप ततश्शास्त्रं महार्थं ब्रह्मणा कृतम् । वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ॥' इति तत्प्रणीते नीतिशास्त्रे वैशालाक्षसमाख्याकीर्तनाच्च । अत एव कालिदासेनापि कुमारसंभवकाव्ये 'ब्रह्मांगभूर्ब्रह्मणि

योजितात्मा' इति विशेषणेन ब्रह्मपुत्ररुद्रविषयतया व्यञ्जिते 'या नः प्रीतिर्विशालाक्ष त्वदनुध्यानसंभवात् । सा किमावेद्यते तुभ्यमन्तरात्मा हि देहिनाम्' इति सप्तर्षीणां तं प्रति वचने 'विशालाक्ष' इति संबोधनं कृतम् । यत्र स्थाणुविशालाक्षनामनी न स्तः तत्रापि शिवस्यापकर्षवचनेषु तमोगुणोपाधित्वसंहारकारित्वहरिविरिञ्चिक्रोधललाटसंभवत्वादिष्वन्यतमं परमशिवव्यावृत्तं किञ्चिद्विशेषणं भवत्येव । यथा 'सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञां श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ।' 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ मम । मया दर्शितपन्थानौ सृष्टिसंहारकारकौ' इत्यादिषु यत्र तदपि नास्ति तत्रापि विधातुर्विष्णोर्वा परमशिवादुत्कर्षस्यासंभवात् परैरपि त्रिमूर्त्युत्तीर्णस्य तस्याभ्युपगमेऽनभ्युपगमे च रुद्रनिकर्षवचनानां संहाररुद्रतदवतारादिविषयत्वस्यावश्यं वक्तव्यत्वात् 'वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते । रुद्रस्यासौ हरस्यास्य विभूतेरेव केवलम्' इत्यादिपराशरपुराणादिवचनदर्शनाच्च तथैव व्यवस्थावसीयत इति भावः ॥ ३५ ॥

ननु 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता' इति बह्वृचब्राह्मणे विष्णोस्सर्वोत्कृष्टत्वं देवतान्तराणां सर्वेषामपि तदपेक्षयापकृष्टत्वं चाहत्याम्नातमतस्तदनुसारेण वेदोपबृंहणेषु पुराणभारतादिषु दृष्टान्यपि विष्णोरुत्कर्षवचनान्यसंकोचेन सर्वदेवतोत्कर्षविषयाण्येव वर्णनीयानि न तु शिवं विहाय तदितरदेवतोत्कर्षविषयाणीत्याशंक्याह—

**अग्नेः प्राथम्यमेव ह्युदितमवम इत्यन्यवाक्यानुरोधा-**

**द्विष्णोरप्येवमुक्तं परम इति गिरा देवतास्वान्तिमत्वम् ।**

**यष्टव्याश्शंसनीया अपि खलु विदिता देवतास्साङ्गसोमे**
**विष्णवन्ताश्चाग्निमुख्या इति कथयति कोऽप्यर्थवादस्तमर्थम् ॥**

अग्नेस्तावत्सर्वदेवतापकृष्टत्वमयुक्तम् । 'अग्निर्मुखं प्रथमो देवतानाम्' 'अग्निरग्रे प्रथमो देवतानाम्' 'अग्निरेतु प्रथमो देवताभ्यः' 'अग्निस्सर्वा देवताः ।' 'राजानौ वा एतौ देवतानां यदग्नीषोमौ' 'अग्निमुखा वै देवाः' इत्यादिश्रुतिभिः यथाग्निर्देवतानां स्यादृतूनां कुसुमाकरः । द्विपदां ब्राह्मणः श्रेष्ठ' इत्यादिस्मृतिभिः 'हुताशनपुरोगमा' इत्यादिविष्णुपुराणादिवचनैश्चाग्नेरुत्कर्षप्रतीतेरतोऽग्निरवम' इत्यंशे कांश्चिद्देवताविशेषान् प्रत्यग्नेरवमत्वपरतया संकुचितार्थवादत्वस्यासदालम्बनार्थवादरूपत्वस्य वावश्यं वक्तव्यतया तत्समभिव्याहृते 'विष्णुः परम' इत्यंशेऽपि तथात्वमेव वक्तुं युक्तम् । तत्र संकुचितार्थत्वकल्पनाप्रकार इत्थम् । अवमपरमशब्दौ प्रथमोत्तमपरौ । 'सर्वा देवता' इति शब्दः प्रकरणबलात् सांगाग्निष्टोमे यष्टव्यसर्वदेवतापरः । अग्निष्टोमाङ्गस्तोत्रेषु शंसनीयसर्वदेवतापरो वा । सप्तसंस्थज्योतिष्टोमाङ्गेषु शस्त्रेषु वा शंसनीयसकलदेवतापरः। तत्र सांऽगेऽग्निष्टोमे प्रथमानुष्ठेयायां दीक्षणीयेष्टौ अग्नाविष्णवन्तर्गतोऽग्निः प्रथमं यष्टव्यः । सर्वोत्तमाया उदवसानीयेष्ट्याः स्थाने वैष्णवी पूर्णाहुतिर्वाजसनेयिभिराम्नाता। तस्यां विष्णुर्यष्टव्यः । तथाग्निष्टोमे द्वादशसु शस्त्रेषु आज्यशस्त्रं प्रथमम् । तत्र 'भूरग्निर्ज्योतिः' इत्याग्निराम्नातः । अग्निमारुतशस्त्रमुत्तमम् । तत्र 'विष्णोर्नुकम्' इति विष्णुराम्नातः । सप्तसंस्थज्योतिष्टोमशस्त्रदेवतास्वप्युक्तरीत्यैवाग्नेः प्राथम्यम् । अन्तिमसंस्थायामप्तोर्यामाख्यायामंतिमं शस्त्रं वैष्णवामिति विष्णोरुत्तमत्वम् । एवमयमर्थवादो यष्टव्यत्वेन शंसनीयत्वेन वैकस्मिन्नग्निष्टोमसंस्थे वा ज्योतिष्टोमे वा

संगतासु देवतास्वग्नाविष्ण्वोः प्रथमोत्तमभावं ब्रवीति न तु सर्वदेवतापेक्षया निकर्षोत्कर्षौ । तथांगीकारे 'अग्निरग्रे प्रथमो देवतानाम् । संयातानामुत्तमो विष्णुरासीत् । यजमानाय परिगृह्य देवान् । दीक्षयेदं हविरागच्छतं नः' इति दीक्षणीयानुवाक्यामन्त्रोऽप्यैकार्थ्यं लभते । तस्मादयमेवार्थोऽस्यार्थवादस्येति भावः ॥ ३६ ॥

ननु 'अग्निर्वै देवानामवम' इत्यादिश्रुतेरुक्तरीत्या संकुचितार्थत्वस्यासदालंबनार्थवादत्वस्य वा कल्पनमयुक्तम् । अधिकरणविरोधात् । पूर्वतन्त्रे हि प्रसंगाध्याये 'ग्रहणार्थञ्च पूर्वमिष्टेस्तदर्थत्वात्' (जै० अ० १२) इत्यधिकरणे सोमांगभूतास्विष्टिष्वग्न्यन्वाधानं कार्यं वेति संशये 'ममाग्नेर्वर्च' इति पूर्वमग्निं निगृह्णाति देवता एव पूर्वेद्युर्गृहीत्वा श्वो भूते यजत' इति प्रकृतौ तस्य देवतापरिग्रहार्थत्वोक्तेस्तास्वपि यक्ष्यमाणदेवतापरिग्रहार्थं तत्कर्त्तव्यमिति पूर्वपक्षं कृत्वा सिद्धान्तितम् 'आग्नावैष्णवमेकादशकपालमैन्द्रं दधि निर्वपेद्दीक्षिष्यमाणोऽग्निरवमो देवतानां विष्णुः परमो देवता एव तदुभयतः परिगृह्य दीक्षित' इति दीक्षणीयाया यक्ष्यमाणसकलदेवतापरिग्रहार्थत्वश्रवणात्तया कृतकार्यमग्न्यन्वाधानं न कार्यम् । न च 'दीक्षा सोमस्य' इति तस्याः प्रधानभूतसोमयागार्थत्वश्रवणात् सोमयागान्वितसकलदेवतापरिग्रहार्थैव सा न तु तदंगेष्टिदेवतापरिग्रहार्थापि । अत इष्टिषु देवतापरिग्रहार्थमन्वाधानं कार्यमिति वाच्यम् । 'वैश्वदेवं गृह्णातीति' विहितविश्वेदेवोद्देश्यकग्रहसाध्यस्सोमयागाभ्यासः श्रुतिविदितयावत्कर्मान्वितसर्वदेवतोद्देश्यकः न तु विश्वेदेवाख्यगणदेवतोद्देश्यकः तथाभूतगणदेवतासद्भावे प्रमाणाभावेन विश्वेदेवशब्दस्य क्वचित् क्लृप्तरूढिरहितस्य यौगिकार्थताया एवोचितत्वात् । तथा च तस्मिन् सोम-

यागाभ्यासे सर्वदेवतासमवायात्तदर्थं सर्वदेवतापरिग्रहं कुर्वन्त्या दीक्षणीयाप्रसंगात्तदंगेष्टिदेवतापरिग्रहस्यापि सिद्धेस्तया कृतकार्यमन्वाधानमिष्टिषु न कार्यमिति यदि 'अग्निर्वै देवानामवम' इत्यादिवाक्यं संकुचितार्थमसदर्थवादमात्रं वा स्यात्तदा तदधिकरणविरोधः प्रायणीयादिष्वप्यग्न्यन्वाधानानुष्ठानप्रसंगश्च स्यादित्याशंक्याह—

**दीक्षासंस्कारसिद्धिः खलु फलमुदितं दीक्षणीयाभिधेष्टे-**
**रन्यार्थत्वान्न तस्याः फलमितरदुरीकर्त्तुमर्हं न यज्ञैः ।**
**यागश्चाद्यन्तयोः स्यात्कथमपि न परिग्राहको देवतानां**
**तस्मात्तत्त्वार्थसिद्ध्यै न भवति विदुषामीदृगर्थोऽर्थवादः ॥**

दीक्षणीया यक्ष्यमाणपुरुषगतदीक्षाख्यादृष्टसंस्कारार्था । 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण' इति श्रुतौ 'तुमुन् ण्वुलौ क्रियार्थायाम् ।' (पा० ३-३-१०) इत्यधिकारपठितेन 'लृट्शेषे च' इति (पा० ३-३-१३) सूत्रेण क्रियार्थायां क्रियायामुपपदे विहितलृट आदेशभूतया शानचः श्रुत्या तस्या दीक्षार्थत्वाभिधानात् । दीक्षणीयेति समाख्यायाश्च करणार्थविहितकृत्यप्रत्ययान्ततया तादर्थ्यावगमात् । अत एव पूर्वतन्त्रे 'परेणावेदनात्' इत्यधिकरणे दीक्षणीयाया दीक्षासंस्कारार्थत्वं सिद्धं कृत्वा दीक्षणीयामात्रेण दीक्षासंस्कारो भवति उत दंडमेखलादिभिरपीति विशेषचिन्ता कृता । एवं श्रुतिसमाख्यायामन्यार्थत्वेनावगतायास्तस्याः नार्थवादावगतं देवतापरिग्रहरूपं फलान्तरं न्यायविद्भिरंगीकर्तुं युक्तम् । अत एवेष्टिष्वन्वाधानस्याग्नीनामानुपूर्व्येण बलवदिन्धनाधानरूपस्य वस्तुसामर्थ्यलिंगेनाग्निधारणं दृष्टं प्रयोजनमवगतमिति तेनैव नैराकांक्ष्यात् 'इमामूर्जं

पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वम्' 'यो वै देवताः पूर्वं परि-
गृह्णाति स येनाश्वो भूते यजत' इति मन्त्रार्थवादावगतं देवतापरिग्रह-
रूपं फलान्तरं नोपेयते । एवं वस्तुसामर्थ्यरूपलिंगमात्रावगतफलपरि-
ग्रहेण मन्त्रार्थवादप्रतीतफलपरित्यागे किमु वक्तव्यं श्रुतिसमाख्याभ्यां
'दीक्षामस्मै यजमानाय धत्तं दीक्षयेदं हविरागच्छतं न' इति दीक्ष-
णीयेष्टियाज्यानुवाक्यामन्त्रलिंगाभ्यामप्यवगतस्य फलस्य सत्त्वेन ते-
नैव नैराकांक्ष्यादिह मन्त्रार्थवादप्रतीतं फलान्तरं नोपेयमिति । किंच ।
आद्यन्तदेवतयोर्योगेन मध्यवर्त्तिदेवता न परिगृहीता भवेयुः । न हि-
पारिभाषिकप्रत्याहारग्रहणन्यायोऽत्र प्रवर्त्तते । न वा यागः करिष्यमाण-
यागोद्देश्यदेवतानिमन्त्रणात्मकस्तत्परिग्रहो भवति । न चान्वाधानस्येव
स्वाङ्गमन्त्रद्वारात्र यागस्य देवतापरिग्रहार्थत्वं कल्पयितुं शक्यम् । 'यज-
मानाय परिगृह्य देवान्' इति मन्त्रे अग्नाविष्णुकर्तृक एव हि देवता-
परिग्रहः श्रुतः न यजमानकर्तृकः । देवतापरिग्रहस्याङ्गत्वाङ्गीकारे च य-
जमानकर्तृकस्यै(स्यैव) तस्याङ्गत्वमेष्टव्यम् । प्रकृतौ मन्त्रार्थवादाभ्यां
तथा भूतस्यैव तस्याङ्गतायाः कल्पनीयत्वात् । यद्यपि प्रसङ्गसिद्धकार्येषु
किञ्चिद्वैगुण्यं न दोषः । तथापि कर्तृभेदे नास्ति प्रसङ्गः । अत एव
चातुर्मास्येषु वरुणप्रघासेषु अध्वर्युप्रतिप्रस्थातृभ्यामुत्तरदक्षिणविहार-
कर्त्तव्ययोरिष्ट्योः पत्नीसंयाजानां गार्हपत्यरूपाग्न्येकत्वेऽपि आध्वर्य-
वेण तदनुष्ठानेन प्रतिप्रस्थातृकर्तृकायां मारुत्यामिष्टौ कर्तृभेदात्तेषां प्र-
सङ्गतस्सिद्धिर्नास्तीति मारुत्यर्थं प्रतिप्रस्थातृकर्तृकमपि तदनुष्ठानं व्य-
वस्थापितं पूर्वतन्त्रे । यद्यप्यग्नाविष्णुकर्तृकेणापि देवतापरिग्रहेण प्रस-
ङ्गसिद्धकार्यतया यजमानकर्तृकदेवतापरिग्रहार्थमन्वाधानमनुष्ठातव्य-
मिति समर्थ्येत तथापि येषु प्रायणीयोपसदादिष्विष्टिपशुष्वग्निर्विष्णुर्वा

देवता तेषु तत्परिग्रहार्थमन्वाधानमनुष्ठेयं स्यात् । तौ हि मध्यवर्तिनां देवतान्तराणामेव परिग्राहकौ स्यातां न तु स्वात्मनोरपि । तस्माद्दीक्षणीयाया देवतापरिग्रहार्थत्वार्थवादः तत्समानप्रकारान्वाधानार्थवादश्च न तत्त्वार्थसिद्धौ प्रभवतीति न ताभ्यां कस्यचिदर्थस्य निर्णयो युक्तः । 'ग्रहणार्थञ्च पूर्वम् (जै.) इत्यधिकरणं तु अभ्युपेत्यवादमात्रम् । धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यत इति प्राचीनाधिकरणे हि सौमिकीष्विष्टिष्वन्वाधानं कर्तव्यमङ्गत्वादिति पूर्वपक्षं कृत्वा अन्वाधानस्याग्निधारणार्थत्वात् सोमे सोमार्थं विहृतस्याग्नेर्धारितस्य सत्त्वेन प्रसङ्गसिद्धस्वकार्यं तन्न कार्यमिति दृढन्यायोपन्यासेन तास्वन्वाधानानुष्ठानं समर्थितमेव । तथाप्यविवक्षितार्थमन्वाधानार्थवादमवलंब्य यदि कश्चिदग्निधारणस्य सिद्धत्वेऽपि देवतापरिग्रहार्थं प्रतीष्ट्यन्वाधानमनुष्ठेयमिति चोदयेत्तं प्रति 'अहृदयवाचामहृदया एव प्रतिवाचो भवन्ति' इति न्यायेन तथाभूतमेव दीक्षणीयार्थवादमवलम्ब्य समाधानं कार्यमिति न्यायव्युत्पादनार्थं तदधिकरणं प्रवर्तितम् । एवं तस्याधिकरणस्याभ्युपेत्यवादत्वं मीमांसकैरपि दर्शितमेव । तस्मादुदाहृतश्रुतिविरोधाभावात् विष्णूत्कर्षपरपुराणभारतादिवचनानां प्राग्वर्णितया रीत्या शिवातिरिक्तविषयत्वव्यवस्थापनं युज्यत एवेति भावः ॥ ३७ ॥

श्रुत्यन्तरविरोधपरिहारास्तु शिवतत्त्वविवेकादिषु प्रपञ्चितास्तत्रैवानुसन्धेयाः । ननु यदि विष्णोः ब्रह्मकोटित्वमिष्यते तदा जीवत्वगमकानां प्रागुदाहृतानां का गतिरित्याकांक्षायामाह—

**शक्त्यंशे सर्वतत्त्वात्मनि पर इति यद्वेदकं तैत्तिरीय-**
**श्रुत्यंशो वक्ति तेनाधिगमितमपरोऽप्यस्ति नारायणोऽन्यः ।**

**सोऽयं जीवस्त्रिमूर्त्यन्तरगतपुरुषस्तत्कलाविष्टमूर्ति-र्द्वेधा संहाररुद्रौ परमशिवकलावेशवन्तौ स्मरन्ति ॥ ३८ ॥**

'नारायणं परं ब्रह्म तत्वं नारायणः परः' इति श्रूयते । अस्यार्थः । पूर्वानुवाके दहरपुण्डरीकोपास्यत्वेन प्रस्तुतं शिवाख्यं परं ब्रह्म नारायणापेक्षया परमुत्कृष्टम् । यस्मात्परो नारायणस्तत्वं शिवतत्वादि भूम्यन्तसकलतत्वात्मको भवति । अतः उपादानस्य स्वतन्त्रकर्तृकशिवेच्छाधीनतत्तदाकारपरिणामादिव्यापारवत्त्वात् मृदपेक्षया कुलालस्येव नारायणापेक्षया शिवस्य परत्वं युक्तमिति । इदञ्चाग्रे शिवस्य नारायणोपास्यत्वं प्रतिपादयिष्यत इति तदुपपादकतयोक्तम् । अत्र जगदुपादाने नारायणे पर इति विशेषणादपरोऽपि कश्चन तदनुपादानभूतो नारायणोऽस्तीत्यवसीयते । स तु त्रिमूर्तिमध्यगतः पालनाधिकृतो जीव इति तद्विषयतया प्रागुदाहृतानां जीवत्वगमकानामुपपत्तिः । तस्मिन्नेवावगतजीवभावे यत्पुराणादिषु परभाववर्णनं दृश्यते तत्सर्वस्मिन्परनारायणकलाविर्भावप्रयुक्तमिति तस्याप्युपपत्तिः । न च संहाररुद्र इव तस्मिन्नपि परब्रह्मणश्शिवस्याभिव्यक्तिविशेषात्परभाववर्णनमित्येवास्त्विति वाच्यम् । यतश्शिवसमाननामरूपवेषादिमति संहाररुद्रे शिवाभिव्यक्तिविशेषवत् परनारायणसमाननामादिमति तस्मिन् तत्कलाविर्भावविशेषस्यैवांगीकारो युक्तः । अत एव स्मरन्त्याश्वलायनाचार्याः 'सिसृक्षुरेक एवाग्रे समासीनश्शिवः स्वयम् । सृष्ट्वा गुणमयीं मायां सूत्ररूपामपाकरोत् । तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम् । स्वयं ब्रह्माभवद्रुद्रो रुद्रश्चास्य क्षयाय सः' इति । गुणमयीं त्रिगुणाभिमानिनीं मायां स्वकीयां ज्ञानशक्तिं प्रळयदशायामविभक्ततया स्थिताम् । सूत्ररूपां जगदुपादानतावस्थापन्नां

कार्योन्मुखीं सृष्ट्वा अपाकरोत् विभक्तावस्थामकरोत्। तया मायया कारणभूतया तदात्मकं विष्णुं स्वकीयज्ञानशक्तिरूपं नारायणं दिवौकसां पालं सकलकार्यनिर्वर्तनेन जगद्रक्षकं सृष्ट्वा स्वयमेव ब्रह्माभवत् अस्य प्रपञ्चस्य संहाररुद्रश्चाभवदित्यर्थः । अत्र शिवस्य ब्रह्मरुद्रात्मना भावस्तदन्तर्यामिरूपेण तयोरभिव्यक्तिविशेष एव विवक्षित इति तत्समभिव्याहारात् 'सृष्ट्वा पालं दिवौकसाम्' इत्यत्रापि परनारायणं पालनाधिकृतापरनारायणान्तर्यामिभावे व्यवस्थाप्येत्यर्थो ग्राह्यः । तस्माद्विष्णोर्जीवत्वगमकानामन्यविषयत्वाज्जगदुपादानस्य परनारायणस्य ब्रह्मकोटितायां न कश्चिद्विरोध इति भावः । एवमुदाहृतमन्त्रे परत्वविशेषणमिव 'बृहत्ते विष्णो सुमतिं भजामहे' 'नमो विष्णवे बृहते करोमि' इत्यादिमन्त्रेषु बृहत्त्वविशेषणमपि बृहदबृहत्तया विष्णुद्वैविध्ये प्रमाणमिति द्रष्टव्यम् ॥ ३८ ॥

उदाहृतमन्त्रार्थोपबृह्मणं वराहपुराणे प्रपञ्चितमुदाहरति—

**संकल्पादादिविष्णोस्समुपनतवपुस्तेन चानुप्रविष्टो**
**विष्णुस्तद्दत्तलक्ष्मीमणिगरुडगदाशंखचक्रादियुक्तः ।**
**नाभीनाळीकदीव्यद्द्रुहिणकृतनुतिर्देवकार्याणि कर्त्ता**
**वाराहाख्ये पुराणे खलु समभिदधे तत्र शक्त्यंश आद्यः ३९**

वराहपुराणे एकत्रिंशाध्याये विष्णुद्वैविध्यं प्रतिपादितम् । 'मनोनामकतत्वञ्च यदेतत्परिपठ्यते। प्रयोजनवशाद्विष्णुरसावेव तु मूर्तिमान् । योऽसौ नारायणो देवः परात्परतरो विभुः । तस्य चिन्ता समुत्पन्ना सृष्टिं प्रति नरोत्तम । सृष्टा चैव मया सृष्टिः पालनीया मयैव हि । कर्मकाण्डममूर्त्तेन कर्तुं नैवेह शक्यते । तस्मान्मूर्तिं सृजाम्येकां यया पाल्यमिदं जगत् । एवञ्चिन्तयतस्तस्य सत्या-

भिध्यायिनो नृप । वाक्सृष्टं यन्मनो राजन्मूर्तिमत्तत्पुरो बभौ । पुराभूते ततस्तस्मिन्देवो नारायणः स्वयम् । प्रविशन्तं ददर्शाथ त्रैलोक्यं तस्य देहतः । ततस्सस्मार भगवान् वरदानं पुरातनम् । वागादीनां ततस्तुष्टः प्रादात्तस्मै पुनर्वरम् । सर्वज्ञः सर्वकर्ता त्वं सर्वलोकनमस्कृतः । त्रैलोक्यवशगश्च त्वं भव विष्णुः सनातनः । देवानां सर्वकार्यञ्च कर्त्तव्यं ब्रह्मणस्तथा । सर्वज्ञत्वं च भवतु तव देव न संशयः । एवमुक्त्वा परो देवः प्रकृतिस्थो बभूव ह । विष्णुरप्यधुना पूर्वं बुद्धिं सस्मार च प्रभुः । तया सञ्चिन्त्य भगवान्योगनिद्रां महातपाः । तां समास्थाय भगवानिन्द्रियार्थोद्भवप्रजाम् । ध्यात्वास्तरणरूपेण तत्र सुष्वाप वै विभुः । तस्य सुप्तस्य जठरात् महत् पद्मं विनिःसृतम् । सप्तद्वीपवती पृथ्वी ससमुद्रा सकानना । तस्य पद्मस्य विस्तारः पाताळं नाळसंज्ञितम् । कर्णिकायां तथा मेरुस्तन्मध्ये ब्रह्मणो भवः । एवं दृष्ट्वा परस्तस्य अपरस्यास्य संभवम् । मुमुदे तच्छरीरस्थः स्वस्थो वाचञ्च सोऽसृजत् । अविद्याविजयं चेमं शंखरूपेण धारय । अज्ञानच्छेदनार्थाय खड्गस्तेऽस्तु सदा करे । कालचक्रमिदं घोरं चक्रवद्धारयाच्युत । अधर्मराजघातार्थं गदां स्थापय केशव । भूपत्वमेतत्परमं यज्ञांगं मुसलं तथा । मायेयं भूतमाला ते कण्ठे तिष्ठतु सर्वदा । श्रीवत्सकौस्तुभौ चेमौ चन्द्रादित्यौ विधारय । मारुतस्ते गतिर्वीर गरुत्मान्स च कीर्तितः । त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदा प्रिया' इति । 'कर्मकाण्डममूर्तेन कर्तुं नैवेह शक्यते' इत्यनेन पालनोपयुक्तमसुरवधादिकममूर्तेन कर्तुं न शक्यत इति परविष्णोश्चिन्तोपवर्णनात्तस्यापरमूर्तावेव सन्निधानात् प्राक् पृथक्व्यक्तमूर्तिपरिग्रहो नास्तीत्यवसीयते । अत एव वराहपुराणे नवमाध्यायेऽपि

प्रथमं नारायणः प्रणवं तेनोंकारादींश्च सृष्ट्वा तदनन्तरं मनस्तत्वाभिमान्यपरविष्णुमूर्तिं सृष्ट्वा तस्यां सन्निदध इत्यादि सृष्टिवृत्तान्ते प्रतिपादितम् । शून्याँल्लोकानिमान्सृष्ट्वा सिसृक्षुर्मूर्तिमुत्तमाम् । क्षोभयित्वा मनो धाम तत्राकारं समाश्रितः ।' इति 'इन्द्रियार्थोद्भवप्रजाम् । ध्यात्वास्तरणरूपेण' इत्यनेन शेषपर्यंकसंकल्प उक्तः । 'भगवन्नक्षविषयाः कथं मूर्तिमुपागता । नागा बभूवुः कुटिलाः एतदाख्यातुमर्हति' इत्यादिना वराहपुराण एव नागानामिन्द्रियार्थमूर्त्तित्वस्योक्तत्वात् ॥ ३९ ॥

ननूदाहृतवराहपुराणवचनैः परापरविष्णुद्वैविध्यमात्रं प्रतीयते । न तु परविष्णोश्शक्त्यंशत्वमित्याशंक्य वराहपुराणवचनान्तरैरेव तत्सिद्धिमाह—

**जीवेन्द्रत्वाभिधानात्परमपदमिति व्याहृतेस्तस्य तत्र**
**स्थाणुं शक्तेश्श्रितायाः परतरमहिमावेदनात्सर्वतोऽपि ।**
**वाग्रूपायाश्च तस्या हरिकमलभवेशानमातृत्वगीते-**
**श्शक्तेरंशस्स तत्राभिमत इति बुधैर्ज्ञायते सूक्ष्मदृष्ट्या ॥ ४० ॥**

वराहपुराण एव प्रजापालनसत्यतपस्संपादनरूपोपाख्याने 'सर्वे देवास्सपितरो ब्रह्माण्डाः काण्डमध्यगाः । विष्णोस्सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः' इति विष्णोर्ब्रह्मादिसकलदेवतास्रष्टृत्वमुक्त्वा तदनन्तरमेवमुपाख्यायेत 'जाठराग्निः प्राणापानौ वाक् शरीरगतनानासुषिररूपमाकाशं शरीरधातवोऽहंकारः शारीरज्योतिः कामक्रोधलोभमोहमदमात्सर्यपैशुन्यासूयाष्टकरूपः कामादिगणो मोहजननी माया श्रोत्ररूपा दिशो वायुर्मनो धर्मो महत्तत्त्वं तन्मात्रा इति पञ्चदश देवता नारायण-

१. 'तेन भूरादींश्च' इति—ख. पाठः ।

सृष्टस्य हिरण्यगर्भस्य शरीरे संभूतास्तासु प्रत्येकं स्वानुप्रविष्टविष्णु-हिरण्यगर्भशरीरस्यावस्थानमहमेव प्रधानभूतेति परस्परं विवदमानाः स्वस्वप्राधान्यप्रकाशनार्थं सर्वा अपि क्रमेण शरीरान्निश्चक्रमुः । तासु निष्क्रान्तास्वपि तदानन्दरूपेण सोमाख्येन परमेश्वरेणाप्यायमानं शरीरं यथापूर्वमुत्थाय सञ्चरदवर्तिष्ट ततोऽग्न्यादयः पञ्चदशापि देवा लज्जिताः परित्यक्तस्वस्वप्रधान्याभिमानास्तस्याप्रसादात् पुनरपि शरीरे स्वस्वस्थानान्यभीप्सन्तः तमेव परमेश्वरं 'त्वमग्निस्त्वं तथा प्राणस्त्व-मपानस्सरस्वति' इत्यादिना सर्वात्मत्वेन स्तुत्वा 'अस्माभिरपयातैस्तु कथमेतद्भविष्यति । इति मत्वा शरीरं तु त्यक्तमस्माभिरेव तु । तत्परं भवता देव तदवस्थं प्रपाल्यते । स्थानभंगो न नः कार्यः स्वयं सृष्ट्वा प्रजापते' इति प्रार्थयामासुः । ततः परितुष्टस्स देवो लीलार्थं भवन्त उत्पादितादृशरीरधारणार्थमन्यार्थं वा नास्ति मे भवदपेक्षा । तथापि लीलार्थं भवतां मूर्तामूर्त्ते द्वे रूपे प्रयच्छामि प्राणिनां शरीरेष्वमूर्त्तेन रूपेण तिष्ठत मूर्तेन रूपेण तु देवलोकेष्वाधिकारिकरूपेण तिष्ठत तत्र 'अग्निर्वैश्वानरः प्राणापानावश्विनौ वाक्पार्वत्याकारो विनायकश्शरीरधा-तवो नागा अहङ्कारः स्कन्दः शारीरज्योतिरादित्यः कामादिगणो ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही माहेन्द्री यमदण्डधरा योगेश्वरी' इति क्रमेण ब्रह्मेशस्कन्दविष्णुवराहेन्द्रयमसृष्टास्सप्त शिवक्रोधसमुद्भूतमुख-ज्वालात्मिका योगेश्वरी चेत्येवंभूतो मातृगणश्शरीरमाया दुर्गा दिशो दशकन्याः प्राच्यादिरूपाः वायुः कुबेरो मनो विष्णुर्धर्मो यमो महत्तत्वं रुद्रः तन्मात्राः पितर इत्येवं देवविशेषा भविष्यथ अहं तु सोमो भूत्वा सर्वान्भवतो रक्षामीत्येवमुवाचेति तदनन्तरं देवैरित्थमभिष्टुतो वरदाता

१. 'ब्राह्मणानां' इति—**ग.** पाठः ।

क्षेत्रज्ञो विष्णुरित्युपसंहृतम् । 'एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः । शरीरदेवताः सर्वास्तस्य स्तुतिपराभवन् । एवंप्रभावो देवोऽसौ वेदवेद्यो जनार्दनः । कथितो नृपते तुभ्यं किमन्यत् श्रोतुमिच्छसि' इति । तदनन्तरं 'कथमग्नेस्समुत्पत्तिरश्विनोर्वा महामुने । गौर्या गणपतेर्वापि नागानां षण्मुखस्य च । आदित्यस्य च मातॄणां दुर्गाया वा दिशां तथा । धनदस्य च विष्णोश्च धर्मस्य परमेष्ठिनः । शंभोर्वाथ पितॄणां वा तथा चन्द्रमसो मुने । शरीरदेवता ह्येताः कथम्मूर्तत्वमागताः ।' इति प्रजापालप्रष्ट्रेन सत्यतपसा अग्न्यादिपित्रन्तानामुत्पत्तिप्रकारं दर्शादिप्रतिपदन्ततिथिपूज्यत्वञ्चोक्त्वा आदिसर्गोत्पन्नस्य सोमस्य सप्तविंशतिदक्षकन्यापरिणेतुः केवलरोहिण्यासक्त्या कुपितस्य दक्षस्य शापात् क्षयव्याधिना मृतस्य क्षीरोदमथनेन पुनर्जननमुक्त्वा 'तस्मिंस्तु मथिते जातः पुनस्सोमो महीपते । योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन्पुरुषः परः । स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः । परेच्छया स मूर्तिं तु पृथक् सौम्यां प्रपेदिवान् । तमेव देवा मनुजाष्षोडशेमाश्च देवताः । उपजीवन्ति वृक्षाश्च तथैवोषधयश्शुभाः । रुद्रस्तस्यैव शकलं दधार शिरसा तदा । तदात्मिका भवन्त्यापो विश्वमूर्तिरतः स्मृतः । तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीं तिथिं विभुः ॥' इति तस्य देहिनां देहे जीवरूपत्वं पौर्णमासीपूज्यत्वञ्चोक्तम् । अत्र यद्यपि यस्य सकलकारणत्वेन प्रतिज्ञातस्य नारायणस्य महिमख्यापनार्थमिदमुपाख्यानमुपक्रान्तम् । तस्य तत्रोपाख्यानवर्णितेन प्रतिशरीरं व्यवस्थितेन जीवसामान्यरूपेण जीवविशेषात्मकेन सोमरूपेण वाग्न्यादिसकलदेवतास्रष्टृत्वं तदुत्कृष्टत्वं तैस्सर्वैरपि स्तुत्यत्वं तेभ्यो वरप्रदातृत्वं सोममण्डलमधिष्ठाय तत्पालयतृत्वं 'भूतकाये-

प्वमूर्तेन देवलोकेषु मूर्तिमान् । तिष्ठध्वं मयि कालान्ते विलयश्चापि नामृतम्' इति तेषां कालान्तरे स्वस्मिन् लयवचनमित्यादि संगच्छते । न च तत्र श्रुता जीवक्षेत्रज्ञसोमशब्दाः परमपुरुषपरा एव सन्त्विति वाच्यम् । तेषां संज्ञारूपेण जीवसामान्ये जीवविशेषे च प्रसिद्ध-तराणां क्लेशेनान्यत्र नयनायोगात् । 'योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन् पुरुषः पर' इत्यादिश्लोके 'क्षेत्रज्ञसंज्ञित' इति 'जीवसंज्ञित' इति च शब्दाभ्यां यत्र क्षेत्रज्ञजीवशब्दयोः संज्ञारूपेण प्रवृत्तिः तयोरेव प्रतीतेः सोमस्य दक्षशापप्रयुक्तव्याधिमरणोक्तेश्च । तथापि तस्य परम-पुरुषस्य जीवसामान्यरूपेण सर्वेषां देहिनां देहेषु स्थितस्य जीवविशे-षात्मना प्रकृतसोममूर्तौ स्थितस्य च स्वरूपेण परिगणितदेवतास्रष्टृत्वा-दिकं संभवतीति न तदन्वये काचिदनुपपत्तिः । 'योऽसौ क्षेत्रज्ञ-संज्ञो वै' इत्यादिश्लोकार्थस्त्वयम्—योऽसौ प्राक् जगत्कारणत्वेनो-पक्रान्तः परमपुरुषो विष्णुर्जीवक्षेत्रज्ञसंज्ञितो जीवसामान्यरूपेण देहिनां देहेषु वर्तते स एव सोमाख्यजीवविशेषरूपेणापि वर्तते स परमपुरुषः परेच्छया परमशिवस्येच्छया पृथक् केनचिद्रूपेण पृथग्भूतस्सन् सौम्यां सोमाख्यजीवविशेषसंबंधिनीं मूर्तिं प्रपेदि-वान्, देवमनुष्यादयोऽग्न्यादिसोमान्ताः षोडश शरीरदेवताश्च तमेव सोममूर्त्यनुप्रविष्टं परमपुरुषमुपजीवन्ति न तु सोममण्डलाभिमानिनं जीवविशेषम् । रुद्रस्तस्यैव सोममण्डलानुप्रविष्टस्य कलाञ्चिद्रूपां चूडा-मणिरूपेण शिरसा दधार । आपस्सुधामय्यश्चन्द्रमण्डलात् स्रवन्त्योऽ-न्याश्चापस्तदात्मिकाः प्रकृतपरमपुरुषस्वरूपाः । अत 'आपो वा इदं सर्वम्' इत्यादिश्रुतौ सर्वात्मत्वेन श्रुतानामपां तद्रूपत्वादयं परमपुरुषो विष्णुर्विश्वमूर्तिरिति । यद्यपि 'योऽसौ क्षेत्रज्ञसंज्ञित' इत्यादिश्लोका हिर-

ण्यगर्भविषया इत्यपि प्रतिभाति। तत्र परिगणितदेवतास्रष्टृत्वादिसंभवात् स्वशरीरोद्भूतानामधिकारनिवृत्तौ स्वशरीरे लयस्याप्युपपत्तेः 'स्थानभंगो न नः कार्यः स्वयं सृष्ट्वा प्रजापत' इति तत्संबोधनस्य गजवक्रोत्पत्त्यध्याये 'यच्चोक्तं ब्रह्मणा पूर्वं सशरीराशरीरता' इति मूर्तामूर्तरूपवरद्वयस्य ब्रह्मदत्तत्वोक्तेश्च सामञ्जस्याच्च। तथापि 'सर्वे देवास्सपितर' इति विष्णुमाहात्म्यवर्णनं प्रस्तुत्योपक्रान्तस्योपाख्यानस्य हिरण्यगर्भमाहात्म्यवर्णनपरत्वे तदेवोपाख्यानमकाण्डताण्डवं स्यात्। 'एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः। शरीरदेवतास्सर्वास्तस्य स्तुतिपराभवन्॥' इति तदुपसंहारोऽप्यसमञ्जसः स्यात्। अतस्सोममूर्त्ताविव हिरण्यगर्भमूर्त्तावनुप्रविष्टस्य विष्णोर्महिमवर्णनपरमिदमुपाख्यानमित्येव संगमयितव्यम्। एवं जीवेन्द्रत्वाभिधानाद्धेतोस्तावद्विष्णुः परस्याश्शक्तेरंशोऽभिमत इति ज्ञायते। चिच्छक्तिरेव जीवसामन्यरूपेण वर्तत इति 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिश्रुतिस्वारस्येन कूर्मपुराणादिदृष्टतदुपबृह्मणवचनजातेन चावगतम्। तदुभयार्थतत्त्वविद्भिश्श्रीकण्ठाचार्यैरपि भाष्ये तस्यास्समस्तचिदचित्प्रपञ्चाकारत्वं बहुषु प्रदेशेषूपन्यस्तम्। तथा सोममूर्तौ चिच्छक्तिस्सन्निधत्त इति 'अहमग्निशिरोनिष्ठः त्वं सोमशिरसि स्थिता। अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम्' इत्युमां प्रति शिववचनेनान्यैश्चैतादृशैश्शिवपुराणादिवचनैरवगतम्। उमा शिवस्य ज्ञानशक्तिरेव न ततोऽन्येत्युमायास्सोममूर्तौ सन्निधानोक्तिश्चिच्छक्तेरेव तदुक्तिः। तथा हि—वराहपुराण एव विनायकोत्पत्त्यध्याये आकाशदेवतायाः विनायकात्मनोत्पत्तौ कारणगणनप्रस्तावे वचनम्—'ज्ञानशक्तिमुमां दृष्ट्वा यद्दृष्टं

---

१. 'जीवाधिपत्वाभिधानात्' इति **ग** पाठः।

व्योम शंभुना । यच्चोक्ता ब्रह्मणा पूर्वं सशरीराशरीरता' इति । तस्मिन्नेव त्रिशक्तिमाहात्म्यप्रकरणे वचनम् 'एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी । एषा ज्ञानात्मिका शक्तिस्सर्ववेदान्तगामिनी ॥' इति । एषा शैवी परा शक्तिर्नयसिद्धान्ताख्ये शिवशास्त्रे प्रतिपाद्यमाना सती सृष्टिपालनसंहारोपकरणतया ब्राह्मी वैष्णवी रौद्रीति त्रैविध्यात्त्रिशक्तिरिति व्यपदिष्टा । एषैव सर्वेषु वेदान्तेषु प्रतिपाद्यमाना सती तेषु ज्ञानशक्तिरिति व्यपदिष्टेत्यर्थः । यद्यपि ब्रह्मविष्णुरुद्राणां परस्परनिरीक्षणादाविर्भूतत्वेनोक्तैषा त्रिशक्तिरुमारूपत्वेन पूर्वं नोक्ता, तथापि प्रकरणस्योपक्रमानुसारेण शिवमाहात्म्यविषयत्वात् 'य इमं शृणुयात्सर्गं त्रिशक्त्याः परमं शिवम् । सर्वपापविनिर्मुक्तः परं निर्वाणमाप्नुयात् । यश्चैनं शृणुयाद्भक्त्या नवम्यां नियतः स्थितः । स राज्यमतुलं लब्ध्वा भयेभ्यश्च प्रमुच्यते । यस्यैतल्लिखितं गेहे सदा तिष्ठति धारणे । न तस्याग्निभयं घोरं सर्पचोरादिजं भवेत् । यश्चैतत्पूजयेद्भक्त्या पूजने स्थापितं बुधः । तेन यष्टं भवेत्सर्वं त्रैलोक्यं सचराचरम् । जायन्ते पशवः पुत्राः धनधान्यादयः स्त्रियः । रत्नान्यश्वा गजा भृत्या ग्रामाश्चाशु भवन्त्युत । यस्येदं तिष्ठते गेहे तस्य सर्वमिदं भवेत् ॥' इति त्रिशक्त्युत्पत्तिश्रवणादिफलकीर्तनानन्तरम् 'एतद्देवरहस्यं ते कीर्तितं भूतधारिणि । रुद्रस्य खलु माहात्म्यं सकलं कीर्तितं मया ॥' इति शिवमाहात्म्यकीर्तनरूपत्वेनास्य प्रकरणस्योपसंहारात् अनन्तरं 'नवकोट्यस्तु चामुण्डाभेदा भिन्ना व्यवस्थिताः । या रौद्री तामसी शक्तिस्सा चामुण्डा प्रकीर्तिता । अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते । या सा तु राजसी शक्तिः पालिनी सैव वैष्णवी । या ब्रह्मशक्तिः सत्त्वस्था सानन्ता वै प्रकीर्तिता ॥' इति शक्तित्रयस्यावान्तरभेदप्रपञ्चमुक्त्वा

'एतेषु सर्वभेदेषु पृथगेकैकशो धरे। सर्वासां भगवान् रुद्रः सर्वगत्वात्पतिर्भवेत् । यावन्त्यस्या महाशक्त्यास्तावद्रूपाणि शंकरः । कृतवांस्तास्तु भजते पतिरूपेण सर्वदा । यश्चाराधयते तास्तु तस्य रुद्रेऽतितोषिते । सिद्ध्यन्ति तास्सदा देव्यो मन्त्रिण्यो नात्र संशयः ॥' इति सर्वस्यापि त्रिशक्तिप्रपञ्चस्य शिवपतित्वाभिधानाच्च उमारूपैव सा विवक्षितावसीयते। 'नयसिद्धान्तगामिनी' इति नयसिद्धान्ताख्याशिवशास्त्रप्रतिपादितत्वोक्त्या च तथावसीयते । एवम् 'अथवा ज्ञानशक्तिस्सा महिषोऽज्ञानशक्तिमान् । अज्ञानं ज्ञानसाध्यञ्च भवतीति न संशयः ॥' इति महिषासुरमर्दिनीं त्रिशक्त्यन्तर्गतशक्तिं ज्ञानशक्तिरिति प्रतिपादयदपि वराहपुराणवचनमुमायास्तथात्वे प्रमाणम् । वराहपुराण एव 'परमात्मा यथा देव एक एव त्रिधा स्मृतः । प्रयोजनवशाच्छक्तिरेकैव त्रिविधाभवत् ।' इति 'सर्वगेयं वरारोहा एकैव त्रिविधा स्थिता।' इति च परशक्तेरुमाया एव त्रिशक्तिरूपत्ववर्णनात् । तस्मात् साधूक्तं सोममूर्तौ सन्निधानं शिवचिच्छक्तेः प्रसिद्धमिति । तथा तस्या एवांशभेदं चूडामणिरूपेण शिवो धत्त इति 'ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम् ।' इत्यादिभिश्शिवागमगतशिवध्यानप्रकरणपठितवचनैः प्रसिद्धम् । वराहपुराणेऽपि 'भवान् पुमान् शक्तिरियं गिरेस्सुता स्वबोधरूपा भगवंस्तथा त्वयि । त्रिशूलरूपेण गुणत्रयं करे स्थितं त्रिनेत्रेषु महाग्नयस्त्रयः । जटास्वरूपेण समस्तसागराः कुलाचलास्सिंधुवहाश्च सर्वशः । शशी परिज्ञानमिदं तव स्थितं न देव पश्यन्ति कुदृष्टयो जनाः ॥' इति सेनान्यर्थं शिवं स्तुवतां देवानां वचनेन तथावगतम् । तथाद्रूपत्वश्रवणादपि विष्णोश्शक्त्यभेदोऽवगम्यते । तथाहि 'आपो वा इदं सर्वं विश्वाभूतान्यापः प्राणा वा आपः

पशव आपोऽन्नमापोऽमृतमापस्सम्राडापो विराडापश्छन्दा᳝᳝᳝ऽस्यापो ज्योती᳝᳝᳝ष्यापो यजू᳝᳝᳝ष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ।’ ‘आपो वा इदमग्र आसुः । तास्सत्यमसृजन्त’ इत्यादिष्वपां सर्वात्मत्वसर्वकारणत्वादिमहिमा श्रूयमाणः तासां स्वतोऽसंभवन्नेवंभूतमहिमयुक्तस्य शिवस्य सर्वशक्तेर्वा कस्य चित् ब्रह्मांशस्य तासु सन्निधानविशेषं सामान्यतो गमयति । कस्य तासु स्वसन्निधानविशेष इत्याकांक्षायाम् ‘इयमेव सा या प्रथमा व्यौच्छत्’ इति देवीसूक्ते देव्याश्शक्तेरंशविशेषाणामपि कृत्यविशेषप्रपञ्चनपरे श्रूयते— ‘अपामेका महिमानं बिभर्ति’ इति । काचन परस्याश्शक्तेरंशभूता देव्यप्सु सन्निहिता सती तासां ‘आपो वा इद᳝᳝᳝ सर्वं’ इत्यादिश्रुतिप्रसिद्धं महिमानं पुष्यतीत्यर्थः । एवं शक्तिधर्मत्वेनावगतमप्सु सन्निधानविशेषरूपमब्रूपत्वमिह विष्णोश्श्रूयते । तथा विष्णौ परमपदमिति व्यवहारो वराहपुराणे त्रिमूर्तिगुणविभागप्रकरणे दृश्यते—‘यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम् । ये सत्त्वरजसी ते तु ब्रह्मा कमलसंभव’ इति । शक्तिरेव परमं पदं तदभेदान्नारायणोऽपीति हि प्राक् कूर्मपुराणवचनमुदाहृतम् । तथा वराहपुराणे शिवाश्रितायाश्चिच्छक्तेः परभावादिर्वृत्रासुरसंहारप्रकरणे त्रिशक्तिमाहात्म्यप्रकरणेऽन्यत्रापि तत्रतत्र सर्वकारणत्वादिरूपो बहुधा प्रपञ्चितः । गौरीविवाहप्रकरणेऽपि परशक्तिरूपतयैव गौर्या महामहिमा वर्णितः—‘इतीरितेयं तव राजसत्तम प्रसूतिरेषा न विदुस्तु यां सुराः । सा कारणं पद्मजदक्षशैलतस्त्रिजन्मभिस्संगमिता स्वमायया ॥’ इति । प्रसूतिः ‘यतः प्रसूता जगतः प्रसूती’ इति श्रुतिप्रसिद्धा पराशक्तिः । तद्रूपा गौरी स्वयं जगत्कारणभूतापि स्वकीयमायया पद्मसंभवात् दक्षपतेर्हिमवतश्च जन्मत्रयेण

संयोजिता स्वयं वस्तुतो जन्मरहितापि परमोहिन्या स्वमायया ततस्ततो जन्मवतीं स्वां दर्शितवतीत्यर्थः । प्रथमं चतुर्मुखसकाशाद्वाग्रूपा देवी गौरीनाम्ना संभूता सा तेन रुद्राय दत्ता । रुद्रे चिरं जले निमज्य तपश्चरति ब्रह्मणा सा स्वांगे संयोजिता सैव दक्षाद्धिमवतश्चाविर्भूतेति वराहपुराणे कथा । तदनुसारेण जन्मत्रयोक्तिः । तथा वाग्रूपायाः परशक्तेस्सकाशाद्विष्णोस्ततश्चतुर्मुखस्य ततो रुद्रस्य चोत्पत्तिसंसूचनेन तस्यास्सर्वमातृत्वं वराहपुराणे प्रख्यापितम् । प्रियव्रतनारदसंवादे 'आश्चर्यमेतद्दृष्टं मे तच्छृणुष्व प्रियव्रत । श्वस्तनेऽहनि राजेन्द्र श्वेताख्यं गतवानहम् । द्वीपं तत्र सरो दृष्टमुरुपंकजसंकुलम् । सरसस्तस्य तीरे तु कुमारीं पृथुलोचनाम् । दृष्ट्वाहं विस्मयापन्नस्तां कन्यामायतेक्षणाम् । कासि भद्रे कथञ्चासि किं वा कार्यमिह त्वया । कर्त्तव्यं चारुसर्वांगि तन्ममाचक्ष्व शोभने । एवमुक्ता मया सा हि मां दृष्ट्वानिमिषेक्षणा । स्मित्वा तूष्णीं स्थिता यावत् तावन्मे ज्ञानमुत्तमम् । विस्मृतं सर्ववेदाश्च सर्वशास्त्राणि चैव हि । योगशास्त्राणि शीक्षा च वेदानां स्मृतयस्तथा । सर्वं दृशैव मे राजन् कुमार्यापहृतं क्षणात् । ततोऽहं विस्मयाविष्टश्चिन्ताशोकसमन्वितः । तामेव शरणं गत्वा यावत् पश्यामि पार्थिव । तावद्दिव्यः पुमांस्तस्याश्शरीरे समदृश्यत । तस्यापि पुंसो हृदये अपरस्तस्य चोरसि । अन्यो रक्तेक्षणश्श्रीमान् द्वादशादित्यसन्निभः । एवं दृष्टा मया पूर्वं त्रयः कन्याशरीरगाः । क्षणेन तावत्कन्यैका न तान्पश्यामि सूनृतान् । ततः पृष्टा मया देवी सुकुमारी कथं मम । वेदा नष्टा ममाचक्ष्व भद्रे प्रब्रूहि कारणम् । कन्या । माताहं सर्ववेदानां सावित्री नाम नामतः । मां न जानासि येन त्वं ततो वेदा हृता मया । एवमुक्ते मया राज-

न्विस्मयेन तपोधना । पृष्टा क एते पुरुषाः एतान् कथय शोभने । कन्या । य एव मच्छरीरस्थास्सर्वाङ्गैश्चारुलोचनाः । एष ऋग्वेदनामा तु देवो नारायणः स्वयम् । वह्निभूतो दहत्याशु पापमुच्चारणादनु । एतस्य हृदये योऽयं दृष्ट आसीन्ममात्मजः । स यजुर्ब्रह्मरूपेण वायुवद्धुनुते मलान् । तस्याप्युरसि संविष्टो य एषोऽत्यन्तमुज्वलः । स सामवेदनामा तु रुद्ररूपी व्यवस्थितः । एष आदित्यवत्पापं नुदते ध्वान्तवत्सदा । एते त्रयोऽग्नयो ब्रह्मन्नेते देवास्त्रयः स्मृताः । एते वर्णा अकाराद्याः सवनान्यत्र वै द्विज । एतत्सर्वं समासेन कथितं ते द्विजोत्तम । गृहाण वेदान् शास्त्राणि सर्वज्ञत्वञ्च नारद ॥' इति । अत्र 'परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः । तस्माद्रुद्रोऽभवद्देवि स च सर्वज्ञतां गतः ॥' इत्यादिषु बहुषु प्रदेशेषु स्रष्टृसृज्यभावेनोक्तानां नारायणचतुर्मुखरुद्राणां पूर्वपूर्वस्याङ्गे उत्तरोत्तरस्य दर्शनोक्त्या तत्प्रायपाठात् सावित्र्यङ्गे दृष्टस्य नारायणस्य तया सृष्टत्वमभिमतमित्युन्नीयते । अत एव 'माताहं सर्ववेदानाम्' इति नारदं प्रति तदुक्तिर्दृश्यते । ननु तत्र बहुधा सर्वोत्तरत्वेन प्रतिपादितस्य नारायणस्य कथमन्यसृष्टत्वमभिमतमिति कल्पयितुं शक्यमिति चेदुच्यते । तत्र त्रिमूर्तिमध्ये तस्य परत्वं निर्धारितम् । न तु सर्वात्मना सर्वोत्तरत्वम् । 'परमात्मा शिवः पुण्य इति केचिद्भवं विदुः । अपरे हरिमीशानमन्ये केचिच्चतुर्मुखम् । एतेषां कतमो देवः परमः कोऽथ वापरः । एतदेव ममाचक्ष्व परं कौतूहलं हि मे ।' इति धरणीप्रश्ने 'परो नारायणो देव' इत्याद्युत्तरमुक्तम् । एवम् 'आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततोऽभवत् । भवः स्वायंभुवश्चान्ये मरीच्याद्याश्च सर्वशः ॥' इत्यादिप्रदेशान्तरेष्वपि त्रिमूर्तिमध्य एव परत्वं निर्धारितम् । तदपि

‘ क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥ ’ इति शिवपुरणोक्त-रीत्या कादाचित्कमेव त्रिमूर्तिमध्ये विष्णोः परत्वम् । वैष्णवपुराण-त्वात् ‘ परो नारयणो देव ’ इत्यादिप्रदेशेषु सार्वकालिकमिव विभावितम् । अत एव तस्मिन्नेव पुराणे ‘ भवान् ब्रह्मा च विष्णुश्च त्रयमेषां त्रयी स्मृता । वेदाग्निद्विजसंयोगैस्सर्वशास्त्रेषु सर्वगाः । कस्मिन्प्रधानो भगवान् काले कस्मिन्नधोक्षजः । ब्रह्मा वा सर्वमाच-क्ष्व मम देव त्रिलोचन ’ इति रुद्रं प्रत्यगस्त्येन त्रयाणामन्योन्याधिक्यं वरगोष्ठीन्यायेन कादाचित्कमिति सामान्यतो निश्चित्यैव तत्तदाधि-क्यकालविशेषप्रश्नः कृतः । यद्यपि तदुत्तरे ‘ विष्णुरेव परं ब्रह्म ’ इति विष्णोस्सार्वकालिकाधिक्येनोपक्रान्तम् । तथापि तदनन्तरं ‘ मनुष्य-भावमाश्रित्य स मां स्तौति युगे युगे । लोकमार्गप्रवृत्त्यर्थं देवकार्यार्थसि-द्धये । अहञ्च वरदस्तस्य द्वापरे द्वापरे द्विज । अहं च तं सदा स्तौमि श्वेतद्वीपे कृते युगे । सृष्टिकाले चतुर्वक्त्रं स्तौमि बालो भवामि च । ब्रह्मा देवासुरैः स्तौति मां सदा तु कृते युगे । लिंगमूर्तिञ्च मां देवा यजंते भोगकांक्षिणः ।’ इति कादाचित्काधिक्योपन्यासेन फलतस्साम्यमेवावि-ष्कृतम् । अत एव तस्मिन् पुराणे त्रिमूर्तिसाम्यमेव बहुधा प्रपञ्चितम् । यथा तावत् सौभाग्यव्रताध्याये ‘ या श्रीस्सा गिरिजा प्रोक्ता यो हरिस्स त्रिलोचनः । एवं सर्वेषु शास्त्रेषु पुराणेषु च पठ्यते । एतस्मा-दन्यथा यत्तु ब्रूते शास्त्रं पृथग्विधम् । तद्राजसानां मर्त्यानां काव्यं शास्त्रं न तद्भवेत् । विष्णुरुद्रान्तरं ब्रूयाद्यः श्रीगौर्योश्च पार्थिव । तन्ना-स्तिकानां मर्त्यानां काव्यं ज्ञेयं विचक्षणैः ॥’ इति । नन्वस्तु नारायणस्य

त्रिमूर्तिमध्ये नियतं परत्वं त्रयाणां फलतस्साम्यं वा तथापि नाराय-
णात्परं वस्तु तस्यापि स्रष्टृ किञ्चिदस्तीति वराहपुराणाभिप्रायः कल्प-
यितुमयुक्तः । 'परमात्मा शिवः पुण्य' इत्यादिधरणीप्रश्ने 'एतेषां
कतमो देवः परः को वाथवापरः ।' इति त्रयाणां मध्ये कः पर इति
प्रश्नानन्तरम् अथवैतद्व्यतिरिक्तः कश्चित् परोऽस्ति चेत् स को
वेत्यपि पृष्टे 'परो नारायणो दव' इत्युत्तरस्य प्रवृत्तत्वेन ततस्तस्मात्
परो नास्तीत्यस्यार्थस्यावगतत्वादिति चेन्न । तदनन्तरं 'स च सर्वज्ञतां
गत' इति रुद्रं प्रस्तुत्य 'तस्याश्चर्याण्यनेकानि विविधानि धराधरे ।
शृणु सर्वाणि चार्वंगि कथ्यमानानि शोभने ॥' इति तन्माहात्म्यवर्णनं
प्रस्तुत्य तन्माहात्म्यपर्यवसायिनि त्रिशक्तिवर्णनप्रकरणे 'परमात्मा
यथा देव एक एव त्रिधा स्थितः । प्रयोजनवशाच्छक्तिरेकैव त्रिवि-
धाभवत् ॥' इति 'सर्वगेयं वरारोहा एकैव त्रिविधा स्थिता ।' इति च
त्रिशक्तिमूलभूतायाः परस्याश्शक्तेः तस्याः पत्युः परमात्मनश्च 'या-
वन्त्यस्या महाशक्त्यास्तावद्रूपाणि शंकरः । कृतवांस्ताश्च भजते पति-
रूपेण सर्वदा ॥' इति अग्रेऽपि स्फुटीकृतस्य तस्मिन्नपि पुराणे अभि-
मतत्त्वावगमात् । ननु 'परमात्मा शिवः पुण्य' इत्यादिना सर्वतः
परतत्वं किमिति पृष्टवतीं धरणीं प्रति 'परो नारायणो देव' इति
नारायण एव सर्वतः परतत्वमित्युपदिष्टवता वराहरूपिणा भगवता
नारायणस्यैव माहात्म्ये प्रपञ्चनीये तदपहाय तदुत्पन्नचतुर्मुखोत्पन्नतया
प्रतिपादितस्य तत एवाभिव्यञ्जिततदवरावरभावस्य रुद्रस्य माहात्म्य-
मपृष्टमेव कया संगत्या 'तस्याश्चर्याण्यनेकानि' इत्यारभ्य प्रपञ्चित-
मिति चेदुच्यते । तत्र धरणीवराहप्रश्नोत्तरयोर्नारायणस्य परत्वनिर्णया-
र्थत्वे यत् सप्तभिरध्यायैः क्रियमाणमिदं रुद्रमाहात्म्यप्रपञ्चनं न संग-

च्छते। अतो रुद्रस्य परत्वनिर्णयार्थमित्येव मन्यामहे। अत एव सप्तमाध्यायान्ते 'रुद्रस्य खलु माहात्म्यं सकलं कीर्तितं मया।' इति धरणीप्रश्नमारभ्य सर्वस्याप्यस्य प्रकरणस्य रुद्रमाहात्म्यपरत्वमुक्तम्। अनन्तरमपि 'अथ रुद्रव्रतोत्पत्तिं प्रवक्ष्यामि धराधरे। येन ज्ञातेन पापेभ्यो मुच्यते भुवि मानवः।' इत्यारभ्य रुद्रचरितोपन्यासपूर्वकं रुद्रव्रतोत्पत्तिमुक्त्वा 'मां पुरस्कृत्य देवास्त्वां यक्ष्यन्ते विधिनाच्युत। शास्त्राणि तानि सर्वेषां कथयिष्यसि सुव्रत॥' इति चतुर्मुखवचनेन रुद्रानुष्ठितव्रतप्रकारेण तस्य चतुर्मुखादिसकलदेवताराध्यत्वमुक्त्वा रुद्र-माहात्म्यप्रकरणं समापितम्। एवं सति 'परो नारायणो देवस्तस्मा-ज्जातश्चतुर्मुखः। तस्माद्रुद्रोऽभवद्देवि' इति परावरभावक्रमकीर्त्तनं कथ-मुपपादनीयमिति चेदुच्यते। अजदशरथश्रीरामचन्द्राणामिव जन्मतः परावरभावकीर्तनं न तु वस्तुत इत्युपपादनीयम्। अत एव रुद्रमा-हात्म्यप्रकरणरूपनवमाध्यायान्ते 'शतरुद्रस्य माहात्म्यं मया ते परि-कीर्तितम्। चरितं यस्य देवस्य व्रतं समभवद्भुवि। कोऽन्यस्त्वभ्यधि-कस्तस्मान्मुक्त्वा नारायणं प्रभुम्॥' इति नारायणव्यतिरिक्तानां सर्वेषामपि ततोऽधिकत्वं निषिद्धम्। 'परो नारायणो देव' इति श्लोकोक्तप्रक्रमादरणे हि चतुर्मुखेनापि ततोऽधिकेन भाव्यम्। 'मुक्त्वा नारायणं प्रभुम्' इत्येतत्तु वैष्णवपुराणत्वात् विष्णुप्रशं-सार्थमित्युपपादनीयम्। यद्वा। 'परो नारायणो देव' इत्यादिश्लोके त्रयाणां कल्पविशेषप्रयुक्तः स्वरूपतः परावरभाव उक्तः। 'तस्या-श्चर्याणि धन्यानि' इत्यारभ्य रुद्रे परमशिवाभिव्यक्त्यतिशयप्रयुक्तः परभावः प्रपञ्चित इत्यविरोध उपपादनीयः। अत एव 'परमात्मा यथा देव' इत्यादिश्लोकेन त्रिमूर्त्युत्तीर्णस्य परमशिवस्य शक्तेश्च

सद्भावसूचनं संगच्छते । स्कन्दोत्पत्त्यध्याये च 'नासीद्यदाकाण्डमिदं त्रिलोचन प्रभाकरेन्दुद्रविणाधिपाः कुतः । तदा भवानेव निरुद्धलोचनः प्रमाणगन्धादिविवर्जितः स्थितः ॥' इति रुद्रं प्रति देवानां स्तुतिवचनं 'यदातमो' मन्त्रार्थसंस्पर्शि संगच्छते । सोमोत्पत्त्यध्याये च 'परेच्छया स मूर्तिं तु पृथक् सौम्यां प्रपेदिवान् ।' इदि साविष्णुकाग्न्याद्यनुक्रान्तसकलदेवतानियन्तृत्वेनोक्तस्यादिविष्णोरपि परमशिवेच्छया सोममण्डलाधिष्ठानवचनमपि संगच्छते । अतस्सकलचेतनरूपत्वस्य देवमनुष्याद्युपजीव्यसोमरूपत्वस्य शिवावतंससोमरूपत्वस्य सलिलरूपत्वस्य परमपदत्वस्य चान्यत्र चिच्छक्तिधर्मत्वेन प्रतिपन्नस्य विष्णौ व्यपदेशात् चिच्छक्तेश्च परमेश्वराश्रिताया बहुशः परभावगमकविष्णुतुल्यमहामहिमप्रतिपादनात् साक्षाच्च सावित्रीरूपायास्तस्याः विष्ण्वादिसकलदेवस्रष्टृत्वाभिधानाच्च चिच्छक्तेरंशस्तथाभूत आदिविष्णुरिति वराहपुराणाभिप्राय उन्नीयते । यद्यप्युक्तहेतुभिश्चिच्छक्त्यंशभेदमात्रं तस्यावगन्तुं शक्यं, तथापि 'यस्यैष शक्तिशकले सकलस्समाप्तः' 'या तस्य पार्श्वगा बाला सा पार्वत्यंशजो हरिः ।' इत्यादिशिवपुराणादित्यपुराणादिवचनैकार्थ्यात् तदंशोऽयमिहाप्यभिमतो निश्चीयत इति भावः ॥ ४० ॥

ननु विष्णुपुराणभागवतादिषु पुराणप्रतिपाद्यस्य विष्णोस्त्रिमूर्त्यन्तर्गतस्यैव ब्रह्मरुद्राभ्यां तत्स्रष्टृत्वतन्नियन्तृत्वादिभिर्हेतुभिस्सात्विकतया श्रेयःप्रदत्वेन चाधिक्यवर्णनं प्रायो दृश्यते । न तु शिवपुराणादिषु शिवस्येव तेषु त्रिमूर्त्युत्तीर्णस्य तस्य महिमवर्णनं तथा दृश्यते । वराहपुराणेऽप्युक्तप्रकारेणैव स्वप्रतिपाद्यस्य विष्णोस्ताभ्यामाधिक्यप्रतिपादनं दृश्यते । यत्तु वराहपुराणे विष्णूत्पत्त्यध्यायवचनजातमुदा-

हृतं यच्च विष्णुपुराणबृहन्नारदीयादिषु क्वचित्क्वचिदादिविष्णोस्त्रिमूर्त्यू-त्तीर्णत्वप्रतिपादनच्छायापन्नं वचनं तत्सर्वं तत्तत्पुराणगतैरेव बहुभि-र्वचनैर्विरुद्धत्वान्न स्वार्थव्यवस्थापनक्षममित्याशंकामपाकरोति——

**प्रायो विष्णुः पुराणैर्जगदवनकरो वर्णितस्सत्त्वशाली**
**स्वीकार्यश्शंभुशक्तेः प्रथमपरिणतिर्विष्णुराद्योऽपि विज्ञैः ।**
**नो चेद्वेदेषु मन्त्रैर्बहुभिरभिनुतो विक्रमैर्विष्टपाना-**
**मादित्यान्तर्गतः स्याद[1]दितिजठरजो विष्णुरेवादिविष्णुः ४१**

यदि प्रायो वैष्णवपुराणेषु सत्त्वगुणयुक्तो जगद्रक्षाकरः त्रिमूर्त्यन्तर्गतो विष्णुरेव बहुशः प्रतिपाद्यत इति तस्य मूलभूतो म-महाविष्णुर्नोच्यत इति तदा 'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदा-भ्यः' 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्' अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे त्रिर्देवः प्रथिवीमेष एताम् ।' 'विचक्रमे श-तर्चसं महित्वा विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यन् ।' 'यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः ।' 'विष्णुरुरुगायो विचक्रमे महीं दिवं पृथिवीमन्तरिक्षम्' इत्यादिभिर्वैदि-कैर्मन्त्रैः प्रायस्त्रिविक्रमरूपस्यैव विष्णोर्महिमा प्रपञ्चित इति स एवा-दिविष्णुर्भवेत् । अवताराणां मूलभूतो महाविष्णुर्न सिध्येत् । यदि त्रिविक्रमस्य विष्णववतारत्वप्रसिद्धेः वैदिकमन्त्रेषु बहुशो दृष्टयापि त्रिविक्रमस्तुत्या विरोधाभावात् वराहपुराणे 'योऽसौ नारायणो देवः परमात्मा सनातनः । स भवान् सर्वभावेन उताहो नेति संशयः ।' इति धरणीप्रश्ने 'मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः । रामो रामश्च

---

१. 'स्याद्विरिभिदवरजो' इति —ख. पाठः ।

रामश्च कृष्णः कल्कीति ते दश । एतास्तेजोऽधिकास्तस्य मूर्तयो भूतधारणि । दर्शनं प्राप्तुमिच्छूनां सोपानानीव शोभने । यत्तस्य परमं रूपं तन्न पश्यन्ति देवताः । अस्मदादिस्वरूपेण पूजयन्ति ततो धृतिः ॥' इति श्रीवराहस्योत्तरदर्शनात् पुराणान्तरेष्वपि तदविसंवादात् विष्णोरवतार एव काश्यपाददित्यां वामनरूपेण जातस्त्रिविक्रम इतीर्यते, तदा 'तत्त्वं नारायणः परः' 'महत्ते विष्णो सुमतिं भजामहे । 'बृहत्ते विष्णो मयि शर्म भद्रम् ।' 'नमो विष्णवे बृहते करोमि' इति मन्त्रगतपरत्वमहत्वबृहत्त्वविशेषणरूपवैदिकलिंगदर्शनात् विष्णूत्पत्त्यध्यायगतवचनजाताद्युपबृंहितात् बहुभिरपि त्रिमूर्त्यन्तर्गतविष्णुमहिमप्रतिपादकवचनैर्वस्तुतो विरोधरहितात् चित्शक्त्यंशभूतस्यादिविष्णोराविर्भावविशेषयुक्तस्तदवतारभेदस्त्रिमूर्त्यन्तर्गतो विष्णुरित्येव युक्तमिति भावः । एवं त्रिमूर्त्युत्तीर्ण आदिविष्णुरिति समर्थितम् ॥ ४१ ॥

अथ त्रिमूर्त्यन्तर्गत एव शक्त्यंशभूतस्स इति पक्षान्तरमुपन्यस्यति—

**यद्वा शक्त्यंश एव स्वयमयमत एवाम्भ्रणी ब्रह्मरुद्र-**
**स्रष्ट्री स्वात्मानमेव प्रकटमकथयत्सिन्धुमध्ये शयानम् ।**
**कर्माण्येतस्य जैवान्यभिनयनविधास्तत्समाकर्णनोत्कान्**
**कृत्वा नानारसाकर्णनकुतुकवतो लीलयानुग्रहीतुम् ॥ ४२ ॥**

अयं त्रिमूर्त्यन्तर्गतो विष्णुः स्वयमेव शक्त्यंश आदिविष्णुः । अत एव खल्वम्भ्रणीसूक्ते सूक्तप्रतिपाद्यस्य स्वमहिम्नः स्वयमेव वक्त्री महर्षेरम्भ्रणस्य दुहितृत्वेनावतीर्णा देवी चिच्छक्तिः 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वैर्देवैः' इत्युपक्रम्य स्वमहिमवर्णनप्रस्तावे 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमे-

धाम्' इति स्वेच्छया ब्रह्मरुद्रस्रष्टृत्वेन स्वात्मानं वर्णयित्वा 'मम योनिरप्स्वन्तस्समुद्रे' इति समुद्रसलिलशायिविष्णुरूपत्वं स्वात्मनोऽभिदधौ। ससुद्रे शयानश्च विष्णुस्त्रिमूर्त्यन्तर्गत इति विष्णूत्पत्त्यध्यायवचनजातेनाप्यवगतम्। तथा कूर्मपुराणहरिवंशादिवचनैः प्रागुदाहृतैस्त्रिमूर्त्यन्तर्गतविष्णववतारत्वेन प्रसिद्धस्य कृष्णस्य चिच्छक्त्यंशभूतादिविष्णुरूपत्वमवगतम्। तस्मात् त्रिमूर्त्यन्तर्गतविष्णुरेवादिविष्णुः। वैदिकानि परत्वमहत्त्वविशेषणानि तस्मिन्नेवावतारायपेक्षया परत्वादिविषयतया योजनीयानि। मनस्तत्वाभिमानिनो विष्णोरादिविष्णुना सृष्टत्वं तत्प्रसादलब्धशंखचक्रादिमत्वमित्यादि यदुक्तं तदभेदे सत्येवादिविष्णोस्सर्वातिशायिमहिमप्रकटनार्थमभिनयमात्रपरमिति योजनीयम्। तस्य श्रुतिपुराणप्रतिपन्नानि यानि यानि जीवत्वगमकानि कर्माणि शोकाज्ञानादीनि च तान्यभिनयमात्रसिद्धानि। तदभिनयश्च शृंगारहास्यकरुणादिरसेषु यो यद्रसाकर्णनकुतुकी तं तद्रसभरितस्वमहिमविषयेतिहासपुराणादिप्रबन्धाकर्णनेन स्वाभिमुखीकृत्यानुग्रहीतुमिति योजनीयम्। तथैव भागवतवचनमपि। 'भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत्' इति। न च सत्यवाक्यत्ववचनजातविरोधः। तस्याधर्मरूपानृतवर्जनपरत्वात्। भगवत्कथाकर्णनप्रवर्तनवैराग्यादिसंपादनफलकस्य च तस्य तथात्वात्। वैष्णवा अपि त्रिमूर्त्यन्तर्गतविष्णुरेवादिविष्णुः न तदुत्तीर्णं वैष्णवं तत्त्वान्तरमस्तीति मन्यन्ते। अत एव सर्वाणि कारणवाक्यानि विष्णुविषयाणीत्यभिमानेन 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेंद्रियाणि सह भूतैः न कारणं कारणानां ध्याता कारणं तु ध्येयस्सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्शंभुराकाशमध्ये' इत्यथर्वशिखाश्रुतमपि कारणवाक्यं विष्णुविषयतया यो-

जयितुं प्रयतमानास्तत्र कार्यवर्गप्रतिपादकावान्तरवाक्ये श्रुतं विष्णुशब्दं प्रद्युम्नादिपरं कल्पयन्ति । निरस्तश्चानभिमतपक्षान्तरैस्सह त्रिमूर्त्युत्तीर्णतत्त्वसद्भावपक्षोऽपि तत्त्वमुक्ताकलापे 'एकं त्रेधा विभक्तं त्रितयसमधिकं तत्त्वमीशास्त्रयस्ते विष्णवन्या मूर्तिरीष्टे प्रभवननियमः कल्पभेदात्त्रयाणाम् । इन्द्रादीनामिव स्यान्निजसुकृतवशादीश्वराणां प्रवाहः स्यादेकस्येश्वरत्वं प्रतिफलनमिवेत्यादि चैवं परास्तम् ॥' इति । एवं पक्षद्वयमुपन्यस्तं यदत्र युक्तं तद्ग्राह्यम् । आद्यपक्षे त्वभ्रणीयसूक्ते चिच्छक्तिर्ब्रह्मरुद्रयोः स्रष्ट्री स्वयमेव विष्णुरूपेति विशेषोक्तिरसिद्धा । 'यं कामये' इत्यादिमन्त्रे 'ऋषि' मिति 'सुमेधा' मिति च शब्दयोर्गुणविशेषवाचितया तत्प्रायपाठादुग्रब्रह्मशब्दावपि गुणविशेषसमर्पकौ । तत्र उग्रशब्दः 'उग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासम्' इति मंत्र इव श्रेष्ठत्वरूपोत्तरत्वसमर्पकः । ब्रह्मशब्दस्तु चतुर्मुखतुल्यगुणसमर्पकः । 'मम योनिरप्स्वन्तस्समुद्र' इति समुद्रशायिन्यां त्रिमूर्त्यन्तर्गतविष्णुमूर्तावादिविष्णोस्सन्निधानात्तदभेदकृतं वचनम् । एवं कूर्मपुराणादिदृष्टं कृष्णाद्यभेदवचनमपीति योजनीयम् । द्वितीयपक्षे विष्णुप्रजापत्योः पृथिव्युद्धरणार्थं वराहरूपपरिग्रहविषयं श्रुतिद्वयं कल्पभेदव्यवस्थया योजनीयम् । अत एव सनत्कुमारसंहितायां हिरण्याक्षवधार्थं विष्णुना गृहीतं वराहरूपं प्रस्तुत्य 'पुरा स्वयंभूर्भगवानुद्धरिष्यन्महीमिमाम् । राजते तेन रूपेण दीप्तिमान्मधुसूदनः ॥' इत्यादिषु प्राजापत्यं वाराहरूपं तस्मिन्नुपमानत्वेन निबद्धम् । 'स्वयं ब्रह्माभवद्धरिः' इत्यादि वचनं तच्छरीरानुप्रवेशपरतया योजनीयम् ॥ ४२ ॥

एवं विष्णुविषयचिन्ताप्रपञ्चं प्राकृतशंकापरिहारेण संगमयन्नुपसंहरति—

**तस्मान्नास्त्यत्र शंका यदखिलचिदचिद्रूपशक्त्या विशिष्टः**
**शंभुर्ब्रह्मेत्यतोऽशद्वयमपि मुनिनात्रैव शास्त्रे विचार्यम् ।**
**इत्यभ्यासादिहेतोः स्वरसत्रिषयमानन्दवाक्यादिकस्या-**
**प्यालोच्य ब्रह्मशक्तेरधिकरणगणास्तत्त्वविद्भिर्विविक्ताः ४३**

आनन्दमयवाक्यं शिवचिच्छक्तिविषयं न तु शिवविषयम् । आनन्दमयाधिकरणमपि शिवचिच्छक्तिविषयवाक्यविचारात्मकमिति प्राक्साधितेऽर्थे ब्रह्ममीमांसायां शिवरूपब्रह्मविषयवाक्यविचारार्थ एव संगतः, न तु तच्छक्तिविषयवाक्यविचार इति शंकायामुत्थितायां, शक्तिविशिष्टश्शिवो ब्रह्म न तु केवलः । अतो विशिष्टरूपब्रह्मैकदेशविषयत्वाविशेषात् विशेष्यांशविषयवाक्यविचारवत् विशेषणांशवाक्यविचारोऽप्यत्र संगत इति परिहारे कृते पुनश्शंकोत्थिता कथं शक्तेर्ब्रह्मकोटित्वमुपपद्यते । शक्त्यंशत्वेन प्राक् समर्थितस्य विष्णोर्जीवत्वादिति । तत्र विष्णोर्जीवत्वेऽपि तदंशभूतायाश्शक्तेर्ब्रह्मकोटित्वमुपपन्नमित्येकदेशिना समाधानं कृतम् । स्वसिद्धान्तानुसारेण तु शक्त्यंशभूत आदिविष्णुर्ब्रह्मकोटिरेव विष्णोर्जीवत्वगमकानि श्रुतिपुराणादिवचनानि त्रिमूर्त्यन्तर्गतविष्णुविषयाणीति कश्चित्परिहारः कृतः । अथवा त्रिमूर्त्यन्तर्गतविष्णुरेवादिविष्णुरिति स न जीवः । तत्र जीवत्वगमककर्मानुष्ठानतत्फलानुभवशोकाज्ञानादिवचनमभिनयमात्रसिद्धार्थमनुवादकमित्यन्यः परिहारः कृतः । एवं सर्वविधोऽप्ययं परिहारांशस्तस्मादित्यनेनानूदितः । एनं हेतुमनूद्य तत्साध्यं पूर्वार्धेनोपसंहृतम् । एवमंशद्वयमप्यत्र शास्त्रे विचार्यमित्येतदालोच्य श्रुतिशास्त्रतत्वविद्भिः श्रीकण्ठाचार्यैः आनन्दमयाधिकरणप्रभृतिष्वधिकरणेषु यत्रयत्राधिकरणे सौत्रहेतुविषयवाक्ययोर्विशेषणांशविषयत्वे स्वारस्यं दृष्टं तत्सर्वं तद्विषयमिति एवं

शक्तिविषयाधिकरणगणो विविच्य प्रदर्शित इत्युत्तरार्धेनोक्तम् ॥४३॥

नन्वाचार्यैरेतावन्त्यधिकरणानि शक्तिविषयाण्येतावन्त्यन्यविषयाणीत्याहत्य विभागः क्वचिदपि कृतो न दृश्यते । आनन्दमयाधिकरणस्य शक्तिविषयत्वमप्येकदेशिमतत्वेनोपन्यस्तम् । तस्मिन्मते सौत्रहेतोर्विषयवाक्यस्य वा स्वारस्यमपि न स्फुटीकृतम् । कथं 'तत्वविद्भिर्विविक्त' इत्युक्तमित्याशंक्याह—

**नोक्तं तैस्तत्रतत्र स्फुटमधिकरणे शक्तिवाक्यत्वमिष्टं**
**व्यक्तं शंकोत्तराभ्यां सकलभुवनगत्यान्तराकाशभाजि ।**
**स्पष्टं जन्मादिसूत्रे व्यवहृतमिदमाकाशवाक्यान्तरेऽपि**
**न्यायोऽन्यत्रापि तुल्यस्तदनुमत इति ज्ञायते तेन धीरैः ॥**

सत्यं शक्तिवाक्यविषयेषु सर्वेष्वप्यधिकरणेषु तत्रतत्राधिकरणे स्थित्वैतद्विषयवाक्यस्य शक्तिवाक्यत्वं स्वाभिमतमित्येवं प्रत्यधिकरणं कण्ठतो नोक्तमिति । तथापि 'आकाशस्तल्लिङ्गात्' (ब्र. १.१.२३.) इत्यधिकरणे 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इति तद्विषयवाक्यस्य शक्तिविषयत्वं कण्ठत उक्तमेव । तत्र भाष्ये हि 'आकाशस्तल्लिंगात् ।' 'अत एव प्राण' इति सूत्रद्वयम् आकाश इति होवाच' 'प्राण इति होवाच' इति विषयवाक्यद्वयञ्च युगपद्विलिख्य आकाशो भूताकाशः प्राणः प्राणवायुरिति पूर्वपक्षप्राप्तौ प्राण आकाशश्च परमेश्वर इति सिद्धान्तयित्वोपसंहृतं 'तस्मात्सर्वभूतकारणत्वं न भूताकाशप्राणयोः इति सिद्धान्त' इति । तदनन्तरं 'स्वपदानि च वर्ण्यन्त' इति भाष्यलक्षणानुसारात् शंकोत्तराभ्यां भूतपदव्यावर्त्यप्रदर्शनव्याजेन अधिकरणस्य शक्तिविषयत्वमाविष्कृतं 'ननु भूताकाश इत्युपपदग्रहणेन किमिति चेत् परमा-

काशस्य परप्रकृतिरूपस्य सर्वभूतकारणत्वसद्भावात् सप्रयोजनम् । तर्हि परमेश्वर इति कथं निर्णयः तदभेदादिति सिद्धम् ' इति। यद्यप्यत्र परमेश्वर इति साध्यनिर्देशं कृत्वौपचारिकशक्त्यभेदाश्रयणेनाधिकरणस्य शक्तिविषयत्वपर्यवसानसंपादनं क्लिष्टमिति साक्षाच्छक्तिरित्येव साध्यनिर्देशो युक्तः। न च 'तत्तु समन्वयात्' इति (ब्र०, १. १. ४.) सूत्रात् ब्रह्मेति साध्यस्य लाभोऽस्ति न तु शक्तिरिति साध्यस्येति वैषम्यं शंकनीयम्। तत्र तच्छब्दस्य विशिष्टपरत्वेन तत एव विशेष्यांशवद्विशेषणांशस्यापि तत्रतत्र यथायोग्यं साध्यतया लाभसंभवात् 'सर्वोपेता च तद्दर्शनात्' इति (ब्र० २.१.३०.) सूत्रात् शक्तिरित्यस्यावश्यकेनाध्याहारेण तत्र सतश्शब्दस्य सिंहावलोकनन्यायेन शक्तिविषयाधिकरणेषु साध्यसमर्पकत्वसंभवाच्च। तथापि भाष्यस्य प्रसन्नगभीरत्वसिद्धये तत्रतत्र संसूचनेनैव शक्तिविषयाधिकरणविभागः प्रदर्शनीयः। शिवशक्त्योरविनाभावैकमत्याभ्यामभिन्नकल्पत्वञ्च ज्ञापनीयमित्यभिप्रेत्येयं सरणिराश्रिता। तथा 'दहर उत्तरेभ्य' इति (ब्र० १.३.१४.सू.) अधिकरणे 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यन्तराकाशवाक्यस्य तद्विषयस्य तस्याधिकरणस्य च शक्तिविषयत्वं शंकोत्तराभ्यां कण्ठत उक्तम्। 'ननु दहरपुण्डरीकमध्ये दहराकाशान्तर्वर्तित्वेनोपास्यत्वं 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान' इत्युपनिषदन्तरे प्रसिद्धं परमेश्वरस्येह दहराकाशत्वेनेति विरोध इति चेत् अत्रापि दहराकाशमध्यवर्ती परमेश्वर उपास्यः किं तु दहराकाशे परमेश्वरधर्माणामपहतपाप्मत्वादीनां संबन्धप्रतीतेर्दहराकाशत्वमपि चिदंबररूपतयेति न विरोध' इति। इत्थं सर्व-

लोकगत्याकाशवाक्यस्यैवान्तराकाशवाक्यस्यैव वा नामरूपोपादाना-काशवाक्यस्यापि चिच्छक्तिविषयत्वं जन्मादिसूत्रभाष्ये 'आकाश-शरीरं ब्रह्म' इति श्रुतिव्याख्यानावसरे स्पष्टं व्यवहृतम् । 'आकाशत इत्याकाशश्चिदंबरमुच्यते । न भूताकाशः । विशेषाभावात् । निखिल-जगदण्डषण्डबुद्बुदनिकुरुंबजलधिस्थानीया परप्रकृतिरूपा परा शक्तिर्हि चिदंबरमुच्यते । तत्स्वरूपं ब्रह्माकाशशरीरम् । परप्रकृतित्वं चिदाका-शस्य 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आका-शं प्रत्यस्तं यन्ति । आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यादिश्रुति-सिद्धम्' इति । तथा 'यदेष आकाश आनन्दो न स्यात्' इत्यान-न्दाकाशपदसामानाधिकरण्यात् आकाशवाक्यरूपस्यानन्दमयवाक्य-स्यापि चिच्छक्तिविषयत्वं जन्मादिसूत्रभाष्य एव नित्यतृप्तत्वविवरणस-मये व्यवहृतम् । "निरस्तसमस्तोपप्लवकळंकनिरतिशयानन्दपरिपूर्ण-त्वमिह नित्यतृप्तत्वम् । अत एव 'आनन्दो ब्रह्म' इति श्रूयते । यः खल्वन्योऽन्तर आत्मानन्दमय' इति प्रस्तुत्य 'सैषानन्दस्य मीमांसा भवति' इत्यारभ्याभ्यासान्निरतिशयशिरस्कत्वेन 'स एको ब्रह्मण आन-न्द' इति निरूपितः । परब्रह्मधर्मत्वेन च स एव 'आनन्दो ब्रह्म' इति प्रचु-रत्वात् ब्रह्मत्वेनोपचर्यते । तादृशानन्दभोगरसिकं ब्रह्म नित्यतृप्तमित्यु-च्यते" इत्यानन्दमयाधिकरणस्य चिच्छक्तिविषयत्वपक्ष एव स्वाभिमत इत्यपि स्फुटीकृतम् । अस्मिन्पक्षे विषयवाक्यस्य स्वारस्यं प्रागेवोपपादि-तम् । अभ्यासहेतुस्वारस्यं तु शिवादित्यमणिदीपिकायां प्रपञ्चितम् । 'वि-कारशब्दान्नेति चेन्न प्राचुर्यात्' इति (ब्र०.१. १. १४.) सूत्रस्या-पि तस्मिन्नेव पक्षे स्वारस्यम् । "स एको ब्रह्मण आनन्दः । आनन्दं ब्रह्मणो विद्वान्' इति निरतिशयाभ्यासेन हेतुना स एवानन्दः

चिच्छक्तिर्भवेत् न त्वानन्दमयः। तत्र मयटोऽन्नमयादिप्रायपाठेन विकारार्थत्वात् चिच्छक्तेश्च स्वविकारत्वायोगात्" इति शंकायाः पूर्वसूत्रनिर्दिष्टहेतूत्थापितत्वेन तत्संगतायाश्च तत्सूत्रार्थत्वलाभात् मयटः प्राचुर्यार्थत्वेन परिहारस्यापि प्रचुरानन्दरूपायां तस्यामेव संगतेः। तद्धर्मिपरत्वे प्राचुर्यार्थानन्वयात्। 'तत्प्रकृतवचने मयट्' इति पाणिनि (५.४.२९.) सूत्रस्य 'प्रकृत्यर्थे मयड्विधायकत्व एव प्राचुर्येण प्रस्तुतमिदमिति विशेषलाभः। प्रकृत्यर्थादर्थान्तरे तद्विधायकत्वे तु प्रस्तुतमिदमस्मिन्नित्येतावानेव तदर्थः। न तु प्राचुर्यार्थान्वयोऽस्ती'ति न्यासादिषूक्तत्वात्। एवमुदाहृतवाक्यत्रयस्य येन न्यायजातेन चिच्छक्ति विषयत्वं तत्साम्यं यत्र यत्र वाक्यान्तरे दृश्यते तस्य सर्वस्यापि चिच्छक्तिविषयत्वं भाष्यकाराभिमतमिति धीरैर्ज्ञायत एव। तथा हि—सर्वलोकगत्याकाशवाक्यस्य भूताकाशविषयत्वमपास्य ब्रह्मविषयत्वव्यवस्थापने लिंगं 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इति सर्वभूतोत्पत्त्युपादानत्वं सर्वभूतलयस्थानत्वरूपं सर्वकारणत्वमिति सूत्रभाष्याभ्यामवगतम्। तत्तु प्रपञ्चाकारपरिणामिन्यां शक्तावेव साक्षादन्वेति न तु शिव इति विषयवाक्यगतलिंगस्य सौत्रहेतोश्च विषयवाक्याधिकरणयोर्ब्रह्मविशेषणांशविषयत्व एव स्वारस्यम्। कूर्मपुराणेऽप्यस्य वाक्यस्य शक्तिविषयतयोपबृंहणं कृतम्। तत्र हि 'सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना' इत्यारभ्य प्रवृत्तेषु शिववाक्येषु पठ्यते। 'अस्याः सर्वमिदं जातमत्रैव लयमेष्यति। एषैव सर्वभूतानां गतीनामुत्तमा गतिः। तयाहं संगतो देव्या केवलो निष्कलश्शिवः। पश्याम्यशेषमेवेदं यस्तद्वेद स मुच्यत' इति। अत्राद्यश्लोकेन सर्वलोकगत्याकाश-

वाक्यस्य तदर्थोपन्यासेन शक्तिविषयत्वं विभावितम् । द्वितीयश्लोके 'केवलो निष्कळ' इत्यनेन शिवस्यापरिणामित्वविभावनया तस्य वाक्यस्य शिवविषयत्वेऽनुपपत्तिर्दर्शिता । नन्वस्य वाक्यस्य शक्तिविषयतायां 'आकाशादेव समुत्पद्यन्त' इत्यवधारणं नोपपद्यते । अवधारणस्य गृहमेधीयपरिसंख्याधिकरणन्यायेन उपात्तसजातीयव्यवच्छेदकतया आकाशस्योपादानत्वेन सकलजगन्मूलकारणत्वप्रतिपादने कर्तृतया प्रसक्तस्य मूलकारणान्तरस्य व्यवच्छेद्यत्वात् शक्त्यतिरिक्तस्य मूलकर्तुरीश्वरस्य सद्भावेन तद्व्यवच्छेदायोगादिति चेन्न । अवधारणस्यात्यन्तसजातीयपरिणामिमूलकारणान्तरव्यवच्छेदकत्वोपपत्तेः । सजातीयग्रहणप्रसक्तावत्यन्तसजातीयस्यैव ग्राह्यत्वात् । ननु तथापि 'आकाश एवैभ्यो ज्यायन्' इत्यवधारणं शक्तिविषयतायां नोपपद्यते । ब्रह्मणोऽपि ज्यायस्त्वात् । ब्रह्मविषयतायामपि नोपपद्यत एव । शक्तेरपि ज्यायस्त्वात् । ज्यायस्त्वं हि 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः ।' 'ज्यायान् दिवो ज्यायानन्तरिक्षात्' इत्यादिवैदिकप्रयोगानुसारेण देशाधिक्यरूपसर्वगतत्वपर्यवसायि पाणिनीयानुसारेण कालाधिक्यरूपनित्यत्वपर्यवसायि च । तदुभयं शिवशक्त्योर्द्वयोरप्यविशिष्टम् । प्रत्युत 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतौ शिवस्य सर्वगतत्वनित्यत्वयोर्दृष्टान्तीकरणाच्छक्तेरेव तदुभयं प्रसिद्धतरम् । प्रसिद्धं ह्यप्रसिद्धस्योपमानं भवति । न च तत्राकाशशब्दो भूताकाशपरः । प्रतिकल्पं प्रत्यण्डञ्च भिन्ने तस्मिन्नित्यत्वसर्वगतत्वयोरभावेन तस्य शक्तिपरत्वावश्यंभावात् । यद्युच्येत शक्तिविशिष्टशिवाभिप्रायेणावधारणं शिवे संगच्छत इति तर्हि शिवाश्रितशक्त्यभिप्रायेण तस्यामपि तत्संगच्छत इति तुल्यम् । शक्तिशिवयोर्वि-

शेषणविशेष्यभावस्य ब्रह्मशब्दार्थतायां व्यवस्थितत्वेऽप्यन्यत्राव्यवस्थि-तत्वात्। 'यथा शिवस्तथा देवी यथा देवी तथा शिवः। नानयोर-न्तरं विद्याच्चन्द्रचन्द्रिकयोरिव। चन्द्रो न खलु भात्येव यथा चन्द्रिकया विना। न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः। एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थितिः। न शिवेन विना शक्तिर्न शक्त्या च विना शिवः। शक्तौ यथा शिवो नित्यं भुक्तौ मुक्तौ च देहिनाम्। यामाहुरखिलेशस्य तैस्तैरनुगतैर्गुणैः। समानधर्मिणीमेव शिवस्य परमात्मनः॥' इत्यादिपुराणवचनैरुभयोस्साम्यावगमात्। एतेन 'स एषोऽनन्त' इति श्रुतं त्रिविधपरिच्छेदराहित्यरूपमान-न्त्यं शक्तौ न संगच्छत इति शंकापि निरस्ता। शक्तिविशिष्ट-तया शिव इव शिवविशिष्टतया शक्तावपि तदुपपादनसंभवात् 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतौ नित्यत्वसर्वगतत्वयोरेवाकाशस्य दृष्टान्तीकरणदर्शनात्तदनुसारेण देशकालपरिच्छेदराहित्यमात्ररूपमा-नन्त्यमिह विवक्षितमिति वक्तुं शक्यत्वाच्च। अपि च भूता-काशादन्यो वाक्यशेषश्रुतलिंगान्वयार्हश्च यदि कश्चिद्वेदान्तप्रसिद्धः शिवादन्यत्वेनाप्यवगत आकाशो न स्यात् तदा यथाकथञ्चिदभ्यस्ता-काशश्रुत्यनुसारेण भूताकाशो वा वाक्यशेषश्रुतलिंगानुसारेण शिवो वानेन वाक्येन प्रतिपाद्य आकाश इति कल्प्येत। अस्ति तु नित्यः सर्वगतः प्रपञ्चाधारोऽतिरहस्यः परदेवतारूपः सर्वप्रपञ्चकारणपरमान-न्दात्मकोऽपहतपाप्मत्वादिगुणकोऽत एव भूताकाशाद्विलक्षणस्तत्र तत्र तद्वैलक्षण्यार्थप्रयुक्तविशेषणेनापि तद्विलक्षणतया स्फुटीकृतः शिवदृ-ष्टान्तीकरणादिना शिवात् पृथङ्निर्देशेन च ततोऽपि विभिन्नतया स्फुटीकृतः कश्चिदलौकिक आकाशः। तथाहि—'आकाशवत्सर्व-

गतश्च नित्य' इत्यनुपदोदाहृतश्रुतौ तावद्दृष्टान्तीकरणसामर्थ्यात् नित्यस्सर्वगतः कश्चिदाकाशोऽस्तीत्यवगतम् । स च सर्वप्रपञ्चाधार इत्येतत् 'यदूर्ध्वं गार्गि दिव' इत्यादिप्रागुदाहृताक्षरब्राह्मणवाक्येनावगतम् । तस्यातिरहस्यदेवतारूपत्वञ्च तस्याप्याधारं पृष्टवतीं वाचक्नवीं प्रति 'गार्गिमातिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि' इति याज्ञवल्क्यवाक्येनावगतम् । तस्य सर्वप्रपञ्चकारणपरमानन्दरूपत्वं 'यदेष आकाश आनन्दो न स्यात्' इति तैत्तिरीयश्रुत्यावगतम् । तस्यापहतपाप्मत्वादिगुणवत्त्वं 'दहरोऽस्मिन्नन्तराकाश' इति प्रकृत्याम्नातेन 'एष आत्मापहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्प' इत्यादिच्छन्दोगोपनिषद्वाक्येनावगतम् । एवमाम्नातैर्नित्यत्वादिविशेषणैरेव तस्य भूताकाशाद्वैलक्षण्यं सिद्धम् । साक्षाच्च भूताकाशपरत्वशंकानिराकरणार्थं प्रयुक्तेन 'यो वेद निहितं गुहायां परमे व्योमन्' इत्यादिश्रुतिषु परमत्वविशेषणेन 'नभो दिव्यं गच्छ स्वाहा' इत्यादिश्रुतिषु दिव्यविशेषणेन 'तत्रापि दहं गगनं विशोक' इति श्रुतौ विशोकत्वविशेषणेन चेतनत्वविशेषणेन च भूताकाशवैलक्षण्यमवगमितम् । 'आकाशवत्' इति श्रुतौ शिवं प्रति दृष्टान्तीकरणेनाक्षरब्राह्मणे 'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' इति शिवाश्रितत्ववचनेन चानन्दवल्ल्यां 'स एको ब्रह्मण आनन्द' इति शिवधर्मत्वकथनेन दहरविद्यादिषु शिवासनत्वकथनेन उपकोसलविद्यायां 'प्राणश्चास्मै तदाकाशं चोचुः' इति प्राणशब्दोक्ताच्छिवात्पृथङ्निर्देशेन 'आकाशो वै नाम' इत्यादिश्रुतौ नामरूपादिस्रष्टुः शिवात् पृथङ्निर्देशेन च तस्य शिवाद्वैलक्षण्यमपि स्फुटीकृतम् । न चोदाहृतश्रुतिष्वाकाशशब्दानां तत्पर्यायाणाञ्च भिन्नार्थत्वं शं-

कनीयम्। प्रसिद्धाकाशविलक्षणानेकाकाशाभ्युपगमस्य गौरवपराहतत्वेन तेषामेकार्थपर्यवसानावश्यंभावात्। एवञ्च सकललोकगत्याकाशवाक्यस्य तथाभूतालौकिकिकाकाशविषयत्वाभ्युपगमेनाकाशश्रुतीनां कारणत्वादिलिंगानाञ्चाबाधनसंभवे किमर्थं शिवविषयत्वस्य भूताकाशविषयत्वस्य वाभ्युपगमेनान्यतरबाधनं कार्यम्। अलौकिकिकाकाशविषयत्वाभ्युपगमे ह्याकाशश्रुतीनामपि न बाधः। 'यस्य सा परमा देवी शक्तिराकाशसंज्ञिता। अनन्तैश्वर्ययोगात्मा महेशो दृश्यते हि स' इत्यादिपुराणवचनेष्वाकाशशब्दस्य तत्पर्यायाणाञ्च तत्संज्ञारूपेण वृत्तेरुक्तत्वात्। किञ्च परब्रह्मपरेषु पुराणभागेष्वाकाशादिशब्दानां तत्संज्ञात्वकथनं तदुपबृंहणीयेषु वेदान्तभागेषु श्रुतानां तेषामुत्सर्गतस्तद्विषयत्वमेवाभ्युपगन्तव्यं न तु भूताकाशपरत्वमित्येतद्ज्ञापनैकप्रयोजनम्। प्रयोजनान्तराभावात्। एवञ्च प्रकृतवाक्यस्यालौकिकिकाकाशपरत्वमाकाशश्रुत्यैवाभ्युपगन्तव्यम्। अयं न्याय 'आकाशस्तल्लिंगात्' (ब्र. १. १. २३. सू) इत्यधिकरणे 'भेदव्यपदेशाच्चान्य' इति पूर्व (ब्र.१.१.२२.) सूत्रानुवृत्त्या सूत्रकारेणापि दर्शितः। तस्यात्रानुवृत्तस्यायमर्थः—'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुतिषु भूताकाशवैलक्षण्यव्यपदेशात् अस्ति ततोऽन्यः कश्चित्सर्वकारणत्वादिशाल्यलौकिकिकाकाशः। स्तद्विषयत्वेन श्रुतिलिंगानां सर्वेषामप्यबाधनसंभवात् लिंगबाधनेन भूताकाशपरत्वं न कल्पनीयम्। वेदान्तभागेष्वाकाशशब्दस्यालौकिकिकाकाशपरत्वोत्सर्गोऽपि न त्यक्तव्य इत्ययं न्यायो जन्मादिसूत्रे भाष्यकृद्भिरपि दर्शितः। तत्र हि 'आकाशशरीरं ब्रह्म' इति श्रुतौ आकाशशब्देन चिदंबरमुच्यत इति प्रतिज्ञाय 'न भूताकाशो विशेषाभावात्' इत्युक्तम्। तत्र 'विशेषाभावात्' इत्यनेन सर्वशरीरगम्य ब्रह्मणो विशिष्य भूता-

काशशरीरत्वोक्त्या न कश्चिदतिशयो लभ्यत इति यद्यप्यर्थो भवति, तथाप्यर्थान्तरमपि तेन विवक्षितं, वेदान्तभागेष्वाकाशशब्दस्य क्लृप्तवैदिकरूढ्यनुसारेणालौकिकाकाशपरत्वमौत्सर्गिकम् । यत्र भूताकाशग्रहणे हेतुर्विशेषोऽस्ति यथा 'आत्मन आकाशस्संभूतः' 'आकाशाद्वायुः' इत्यादौ तत्रैव तस्य ग्रहणं न्याय्यम् । इह तु तथाभूतो विशेषो नास्तीति अनुवृत्तसूत्रगतेन चकारेण शिववैलक्षण्यस्य श्रुत्यन्तरेषु व्यपदेशात् शिवादप्यन्योऽयमलौकिकाकाश इति समुच्चीयते । नन्वित्थमाकाशवाक्ये दर्शितस्य न्यायस्य यत्रयत्रानुवृत्तिः तस्य सर्वस्यापि वाक्यस्य शक्तिपरत्वाङ्गीकारे प्रागुदाहृतं प्राणवाक्यमपि तत्परं स्यात् । ततः 'सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमभ्युज्जिहत' इति सर्वभूतसंवेशनोद्गमनावधित्वस्य सर्वोपादानत्वरूपस्य तल्लिङ्गस्याम्नानादिति चेत् । अस्तु को दोषः । संभवति हि प्राणशब्दस्यापि तत्र वृत्तिः । 'को ह्येवान्यात्कः प्राण्यात्' इति तस्यास्सर्वप्राणनहेतुत्वश्रवणात् 'सत्यात्म प्राणारामम्' इति श्रुतौ प्राणशब्दस्य तत्परत्वेन भाष्ये व्याख्यातत्वाच्च । एवमस्य वाक्यस्य शक्तिविषयत्वादेव एतद्विचारात्मकमधिकरणं शक्तिविषयेणाकाशाधिकरणेनैकीकृत्य लिखितं भाष्ये । न चातिदेशत्वाधिकरणमात्रत्वमेकीकरणे कारणम् । 'एतेन योगः प्रत्युक्त' इत्या(ब्र.२.१.३.सू.)द्यधिकरणानामतिदेशाधिकरणत्वेऽपि पूर्वाधिकरणैरेकीकृत्यालिखितत्वात् । किंत्वतिदेशाधिकरणत्वाभावे न्यायवैलक्षण्यात् शक्तिविषयत्वे पौर्वापर्ये च सत्यप्येकीकृत्य लिखितुं शक्यत इति तदप्येकीकरणोपयोगि । नन्वेवं सद्विद्यापि शक्तिविषया स्यात्, तस्यां बहु स्यां प्रजायेय' इत्यारभ्य सर्वोपादानत्वप्रतिपादनात् 'तद्यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिपरिणाम्युपादानदृष्टान्तीकर-

णस्य चाधिक्यस्य सत्त्वादिति चेत्, सत्यं, तथापि 'तत्त्वमसि' 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इत्युपासनातत्फलवचनानुसारेण तस्याश्शक्तिविशिष्टशिवविषयत्वमङ्गीकर्तव्यमिति 'तन्निष्ठस्य मोक्षोपदेशात्' इति (ब्र० १. १. ७.) सूत्रेणाभिव्यञ्जितम्। ईक्षत्यधिकरणभाष्येऽपि तदनुसारेण शक्तिविशिष्टशिवपरत्वं सच्छब्दस्योपपादितम्। ननु, वेदान्तेष्वाकाशशब्दस्य शक्तिविषयतौत्सर्गिकत्वाङ्गीकारे गायत्रीविद्यायां 'यद्वैतद्ब्रह्म' इति 'इदं वाव तद्योऽयं बहिर्द्धा पुरुषादाकाशः' इत्याकाशपदसामानाधिकरण्यात् सापि शक्तिविषयांगीकर्त्तव्या स्यादिति चेत्। अंगीक्रियत एव। शक्तेरेव हि 'गायत्री वा इदं सर्वं भूतं वाग्वै गायत्री' इति श्रुतं गायत्रीरूपत्वं वाग्रूपत्वं च वराहपुराणादिषु प्रसिद्धम्। गायत्रीविद्याप्रकरणे 'तदेतदृचाभ्यनूक्तम्। तावानस्य महिमा। ततो ज्यायाꣳश्च पूरुषः। पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि' इत्युदाहृतमन्त्रे तस्याः परमपुरुषात्मकं यद्रूपं तेन सर्वात्मतापत्तिः पादत्रयेणोच्यते। तस्य रूपस्य सर्वभूतात्मताप्रहाणे यदात्मतापत्तिः तत्तस्य प्राप्यं मूलं रूपं 'तद्विष्णोः परमं पदम्' इति मंत्रप्रसिद्धं चतुर्थपादेनोच्यत इति सर्वं संगच्छते। नन्वेवं सति गायत्रीविद्यानन्तरं 'यदतः परो दिवो ज्योतिर्दीप्यत' इत्यारभ्य पठिता ज्योतिर्विद्यापि तद्विषया स्यात्, तयोरेकविषयत्वस्य 'ज्योतिश्चरणाभिधानात्' इत्य (ब्र०.१.१.२६. सू.) धिकरणे व्यवस्थापनादिति चेत्। अस्तु, तथापि न कोऽपि दोषः। यत् 'त्रिपादस्यामृतं दिवि' इति पूर्वोदाहृतमन्त्रभागोक्तममृतत्र्यंशात्मकं तस्य रूपं जाठराग्नावुपासनान्तरविधानार्थं ज्योतिर्विद्याप्रवृत्तेत्युपपद्यत एव। एवं तर्हि ज्योतिर्विद्यानन्तरं सर्वं खल्विदं ब्रह्म' इत्यारभ्याम्नाता शाण्डिल्यविद्यापि शक्तिविषया स्या-

दिति चेत् । नेति ब्रूमः । तत्र 'मनोमयः प्राणशरीर आकाशात्मा' इति विशेषणैः 'आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम्' इति शिवविषयश्रुत्यन्तरगतविशेषणार्थस्यानूद्यमानतया तेनाकाशव्यतिरेकावगमात् । यद्वा । गायत्रीविद्या ज्योतिर्विद्येत्येतद्विद्याद्वयमपि शिवविषयमेवास्तु । तत्र 'यद्वैतद्ब्रह्मे' ति 'इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाश' इत्याकाशपदसामानाधिकरण्यं हृदयस्तुत्यर्थमस्तु । अग्रिमखण्डे हि 'तस्य हवा एतस्य हृदयस्य' इत्यादिना हृदयसुषिरपञ्चके आदित्यादिद्वारपालोपासनं विधास्यते । तत्र बाह्याकाशं ब्रह्मतयोपचर्य 'अथ यो वै बहिर्धा पुरुषादाकाशोऽयं वाव स योऽयमन्तः पुरुष आकाशोऽथ योऽवै सोऽन्तः पुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाश' इति क्रमेण हृदयाकाशस्य ब्रह्मतोपचारे हृदयमेव स्तुतं भवति । इहाकाशशब्दस्य भूताकाशपरत्ववादेऽपि हि ब्रह्माकाशपदसामानाधिकरण्यमुक्तक्रमेण हृदयस्तुत्यर्थमित्येवोपपादनीयम् । एवमनया दिशा शिवशक्तिविषयाधिकरणानामाचार्याभिमतो विभागो मनीषिभिरुन्नेयः ॥ ४४ ॥

ननु, शक्तेर्ब्रह्मशब्दार्थैकदेशत्वेऽपि शास्त्रे तद्विचारो न कर्तव्यः । यस्य ज्ञानान्मोक्षस्तद्विचारार्थमिदं शास्त्रं प्रवृत्तम् । सर्वेतरपरित्यागेन शिवस्यैव ज्ञानान्मोक्षः 'शिव एको ध्येयश्शिवङ्करः सर्वमन्यत्परित्यज्य' इति श्रुतेः । अतोऽत्र शक्तिविषयाधिकरणविभागचिन्तनमस्थानविजृंभितमित्याशंकां निराकरोति--

**तत्तत्त्वावेदने तत्समरसशिवनिध्यानहेतोरलाभा-**
**न्मुक्तिप्राप्त्यानुभाव्यस्थिरफलमहिमालोचनस्याप्यभावात् ।**

**शास्त्रं स्याद्व्यर्थकल्पं न सकलविषयं सार्धवक्तव्यशेषं**
**तस्मात्तत्त्वचिन्ताप्यविकलविषया सर्वथैवात्र कार्या ॥**

'उमासहायं परमेश्वरं प्रभुं' 'पुरुषं कृष्णपिंगळम् ।' 'तस्मात्सह तया शक्त्या हृदि पश्यन्ति ये शिवम् । तेषां शाश्वतिकी सिद्धिर्नेतरेषामिति श्रुतिः ॥' इत्यादिश्रुतिस्मृतिवचनैश्शक्तिविशिष्टस्यैव शिवस्य ज्ञानं मोक्षहेतुः न केवलस्येत्यवगतम् । तदनुरोधेन 'सर्वमन्यत्परित्यज्य' इति श्रवणं शिवादन्यस्य स्वातन्त्र्येण ध्येयत्वव्यवच्छेदपरम् । अपि च । मुक्ति प्राप्तिर्भोग्यं शाश्वतं फलं परमानन्दरूपा शिवशक्तिरेव । 'स एको ब्रह्मण आनंदः । श्रोत्रियस्य चाकामहतस्य' इत्यादिश्रवणात् । एवञ्च शक्तितत्त्वज्ञानानिरूपणे शक्तिविशिष्टशिवोपासनाहेतोरलाभात् मुक्तप्राप्यफलस्वरूपज्ञानासंभवाच्च स्वरूपप्रमाणसाधनफलैस्सह ब्रह्मनिरूपणार्थं प्रवृत्तमिदं शास्त्रं सकलविषयं शिवांशनिरूपणाच्छक्त्यंशानिरूपणाच्चार्द्धेन वक्तव्यशेषेण युक्तं सत् व्यर्थप्रायं भवेत् । ततस्साकल्येन शक्तितत्त्वनिरूपणमप्यस्मिन् शास्त्रे कार्यमेवेत्यर्थः ॥ ४५ ॥

इतोऽपि शक्तिस्वरूपनिरूपणमिह कार्यमित्याह—

**शास्त्रे चास्मिन्महेशे श्रुतिशिखरगिरामन्वितत्वं प्रदर्श्य**
**तास्त्वद्वैतप्रधानास्तदिह न घटते शक्तियोगानपेक्षे ।**
**तस्माच्छक्तेर्निरूप्यं सकलचिदचिदाकारशालि स्वरूपं**
**तात्पर्यं तेन तासां भवति सुघटितं तत्र शक्त्या विशिष्टे ॥**

इह शास्त्रे सर्वेषां वेदान्तानां शिवे तात्पर्येण समन्वयः 'तत्तु समन्वयात्' इति (ब्र० १. १. ४.) सूत्रदर्शितः समर्थनीयः ।

वेदान्ताश्चाद्वितीयत्वं ब्रह्मणः प्राधान्येन प्रतिपादयन्ति । तच्च शिवस्य परब्रह्मणस्सगुणस्यापरिणामिना सर्वविकारस्पृष्टेन स्वरूपेण नोपपद्यते । अतस्सकलचेतनाचेतनात्मकप्रपञ्चाकारपरिणामिशक्तेः स्वरूपमप्यत्र निरूपणीयम् । तथा सति शिवस्य स्वरूपेणासंभवदपि अद्वितीयत्वं ब्रह्मशब्दार्थभूतशक्तिविशिष्टेन रूपेण संभवतीति तत्र ब्रह्माद्वैतपराणां वेदान्तवाक्यानां तात्पर्यमुपपादितं भवति । अतस्तदर्थमपि शक्तितत्त्वनिरूपणमिह कार्यमित्यर्थः ॥ ४६ ॥

ननु, शुद्धाद्वैत एव सर्वेषां वेदान्तानां पुराणाद्युपबृंहणानाञ्च महातात्पर्यम् । ब्रह्मसूत्राण्यपि विचार्यमाणानि तत्रैव तात्पर्येण पर्यवसानवन्ति । यथा चैतत्तथास्माभिश्शङ्करभगवत्पादनिरूपितेन प्रकारेण न्यायरक्षामणौ समर्थितम् । तथाभूतं शुद्धाद्वैतं त्यक्त्वा किमिति विशिष्टाद्वैतं भाष्यकारैराश्रितम् । न हि यथाकथञ्चिदद्वैतसमर्थनमात्रेण वेदान्तानां सन्तोषः । किं तु स्वकीयमहातात्पर्यविषयाद्वैतनिरूपणेनैवेत्याशंक्याह—

**शुद्धाद्वैते हि सर्वश्रुतिशिखरगिरामागमानाञ्च निष्ठा**
**साकं सर्वैः पुराणस्मृतिनिकरमहाभारतादिप्रबन्धैः ।**
**तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति**
**त्यक्तं तद्भाष्यकारैरिह कथमिति चेन्नैव तत्त्यक्तमार्यैः ॥**

कथं न त्यक्तमित्याकाङ्क्षायां तदुपपादयति—

**उक्ता खल्वत्र मुक्तिर्गतिमुपरि विना निर्गुणोपासकानां**
**जीवाभेदावलम्बा सगुणपरशिवोपासनाप्यत्र भाष्ये ।**
**सत्ताप्रत्यक्षबुद्धेर्जगति च विषयो वर्णितस्सत्यतान्यः**
**शुद्धं ब्रह्माद्वितीयं मतमिति बहुधाविष्कृतं तावदेवम् ॥**

अस्मिन्भाष्ये ‘अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्यां’ इ-(ब्र. ३. ३.३२. सू.) त्यधिकरणे ‘सर्वेषां ब्रह्मोपासकानामर्चिरागिदतिस्साधारणी न तु केषाञ्चिदेवेति व्यवतिष्ठते’ इत्यधिकरणार्थं प्रदर्श्य तदनन्तरं ‘केचिदाहुः अनियमस्सर्वेषामुपासकानामर्चिरादिगतौ नियमाभावस्तथा सति श्रुतिस्मृतिभ्यामविरोधः’ इत्यर्चिरादिगतेस्सर्वब्रह्मोपासकसाधारण्याभावमेव सूत्रार्थतया केचन योजयन्ती’त्युक्त्वा ‘तत्रापि न दोषः। निरन्वयोपासकानां तदपेक्षाभावात्’ इति निर्गुणोपासकानामर्चिरादिगत्यनपेक्षाहेतुना स्वयं तदुपापादनं कृतम्। ‘तदापीतेस्संसारव्यपदेशात्’ (ब्र. ४. २, ८. सू.) इत्यधिकरणे सर्वेषां ब्रह्मोपासकानामपि शरीरपातसमये प्राणानां जीवाविश्लेषणोत्क्रान्तिरस्ति। तत्पूर्विका गतिश्चेति सिद्धान्तप्रदर्शनार्थं प्रवृत्ते ‘अर्चिरादिना तत्प्रथितेः’ (ब्र. ४. ३. १. सू.) इत्यधिकरणे सर्वेषां ब्रह्मोपासकानामर्चिरादिगतिरेकैव न तु मार्गान्तरमस्तीति निर्णयार्थं प्रवृत्ते च निरन्वयोपासकानां नोत्क्रान्तिर्नाप्यर्चिरादिगतिः’ इत्येतन्मतान्तरमुपन्यस्तम्। एवं यत्रयत्र गत्युत्क्रान्त्योस्सर्वोपासकसाधारण्योक्तिः प्रसक्ता तत्र सर्वत्रापि निर्गुणोपासकसाधारण्यशंकापरिहारार्थमस्य मतस्योपन्यासात् स्वयं तदुपपादनाच्चास्य स्वाभिमतत्वमुन्नीयते। तथा ‘आत्मेति तूपगच्छन्ति ग्राहयन्ति च’ इत्य (ब्र०.४.१. ३.सू.)धिकरणे सगुणब्रह्मोपासनापि जीवाभेदविषयेति व्यवस्थापितम्। तादर्थ्येनैव तदधिकरणं प्रवर्तितम्। तथा जन्माधिकरणारंभाधिकरणयोः ‘सन् घट’ इत्यादिप्रत्यक्षस्य प्रपञ्चसत्यत्वविषयत्वं परिहृत्य ‘मृद्घट’ इत्यादिप्रत्यक्षवदुपादानतादात्म्याविषयत्वं प्रदर्शितम्। एवमादिभिः बहुभिः प्रकारैर्जीवाभिन्नं निष्प्रपञ्चं ब्रह्मेति भाष्यका-

रैश्शुद्धाद्वैतं स्वाभिमतत्वेनाविष्कृतमेव। न तु तत्त्यक्तमित्यर्थः॥ ४८॥

अत्रैव गमकान्तराण्युदाहरति—

**चिच्छक्तिं ब्रह्मणो यत्सकलचिदचिदाकारशालिस्वरूपां**
**सत्तां तस्य स्वरूपं यदपि गुणगणं यच्च तन्निर्विकारम्।**
**आचार्याः प्रोचुरेतैर्दृढमधिगमितं निर्विशेषं तदिष्टं**
**जीवास्तेनैक्यभाजो वियदनिलमुखास्तद्विवर्ता इतीदम्॥**

इह भाष्ये ब्रह्मणश्चिच्छक्तिं सकलचेतनाचेतनप्रपञ्चाकारापन्नस्वरूपां तामेव ब्रह्मणः स्वरूपभूतां शिवशंभुशंकरादिसकलनामधेयप्रवृत्तिनिमित्तपर्यंततदीयनिखिलगुणगणात्मिकां ब्रह्म च निर्विकारमाचार्याः प्रतिपादयामासुः। तद्यथा–प्रथमसूत्रभाष्ये तावत् 'ततस्सकलचिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमसाररहस्यनिधानस्य भवशिवशर्वपशुपतिपरमेश्वररुद्रशंभुप्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरममहिमविलासस्य स्वशेषभूतसकलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं विचारणीयम्' इति शक्तेस्सकलचेतनाचेतनप्रपञ्चाकरत्वमुक्तम्। तथा जन्मादिसूत्रभाष्ये 'निखिलजगदण्डषण्डबुद्बुदनिकुरुंबजलधिस्थनीया परप्रकृतिरूपा परमशक्तिर्हि चिदंबरमुच्यते। तत्स्वरूपं ब्रह्माकाशशरीरम्' इति ईक्षत्यधिकरणभाष्ये स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपसत्पदविषय' इति आरंभणाधिकरणभाष्ये स्वाभिन्ननामरूपविभागानर्हसूक्ष्मचिदचिद्रूपपरशक्तिगर्भितो हि शिवः केवलो भवति। पुनः स्वात्मिकां तादृशीं शक्तिं पूर्वदशाविरोधिस्थूलत्वयुक्तनामरूपविभागार्हदचिद्रूपां बहिर्विस्तारयति' इति च ब्रह्मशक्तेस्सकलचेतनाचेतनप्रपञ्चाकारत्वमुक्तम्। एवमन्ये-

ष्वपि बहुषु प्रदेशेष्वयमर्थ उद्धोषितः । तथा शक्तेर्ब्रह्मस्वरूपात्मकत्वम् 'ईक्षतिकर्मव्यपदेशात्सः (ब्र. १. ३. १२.सू ) इत्यधिकरणे वर्णितम् । तत्र हि 'एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोंकारः' इत्यादिसत्यकामप्रश्नोत्तरसन्दर्भे एकमात्रप्रणवोपासनस्य तत्प्रथममात्रात्मकऋक्प्रापणीयमनुष्यलोकप्राप्तिफलं द्विमात्रप्रणवोपासनस्य तद्वितीयमात्रात्मकयजुःप्रापणीयान्तरिक्षलोकप्राप्तिफलञ्चाभिधाय यदाम्नायते 'यः पुनरेतं त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हवै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति । तत्र ब्रह्मलोकः परब्रह्मणश्शिवस्य लोकस्तस्मिन्निरीक्षणीयः पुरुषश्शिव इति सिद्धान्तोऽभिमतः । तदर्थमिह ब्रह्मलोको विष्णुलोकः 'ऋग्भिरेतं यजुर्भिरंतरिक्षं स सामभिर्यत्तत्कवयो वेदयन्त' इत्युक्तार्थसंग्राहके तदनन्तरमन्त्रे 'तद्विष्णोः परमं पदम्' इति मन्त्रेण विष्णुलोके प्रतिपन्नस्य विद्वदनुभवविषयत्वस्य तस्मिन्ब्रह्मलोके प्रत्यभिज्ञायमानत्वात् । अतस्तस्मिन्निरीक्षणीयः पुरुषो विष्णुरेवेति पूर्वपक्षमुपन्यस्य सिद्धान्ते तदनुवादपूर्वकं तन्निरास इत्थं कृतः 'यदुक्तं तद्विष्णोः परमं पदं' इति तत्र प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परमं पदं रूपं तदेव शिवाभिधेयं परंब्रह्मेत्यविरोधः । अतो विष्णुशिवयोरुपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपभेदो नास्ति' इति । अत्र शिवलोके 'तद्विष्णोः' इति मन्त्रार्थप्रत्यभिज्ञानसंघटनार्थं तस्य मन्त्रस्य शिवलोकविषयत्वमेव वक्तुं युक्तम् । न तु शिवाविषयत्वम् । अत एव 'सोऽध्वनः पारमाप्नोति । तद्विष्णोः परमं पदम्' इति मन्त्रस्य शिवलोकाविषयत्वं 'कार्य

बादरिरस्य गत्युपपत्तेः' (ब्र. ४. ३. ६.सू ) इत्यधिकरणभाष्ये वर्णितम्। 'तद्विष्णोः' इति मन्त्रस्यैतद्भाष्यदर्शितार्थावलंबनेन शिवविषयत्वमुपपादयितुमप्यशक्यम्। न हि प्रपञ्चाकारेणावस्थितस्य विष्णोश्शिवस्साक्षात् स्वरूपमिति भाष्यकारसिद्धान्तः। किं तु शिवशक्तिरूपः परमानन्दस्तस्य साक्षात्स्वरूपमिति। तस्य शिवशक्त्यवस्थारूपत्वमेव हि प्रकृत्यधिकरणभाष्यादिषु प्रतिपादितम्। तस्मादित्थमस्य भाष्यस्यार्थो वर्णनीयः। 'प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परमं पदं रूपम्' इत्यनेन जगदाकारपरिणतविष्णववस्थाप्रकृतिभूता चिच्छक्तिरुच्यते। सैव परमशिवलोकतयापि वर्तत इति तेन 'तद्विष्णोः' इति मन्त्रस्य शिवलोकविषयत्वं दर्शितं भवति। 'तदेव शिवाभिधेयं परं ब्रह्म' इति तस्याश्शिवस्वरूपाभिन्नत्वमुच्यते। ननु, प्रत्यभिज्ञानाविरोधसंघटनार्थं 'तद्विष्णोः' इति मन्त्रस्य शिवलोकाकारतापन्नचिच्छक्तिमात्रविषयत्वं वक्तव्यम्। चिच्छक्तेश्शिवस्वरूपाभिन्नत्ववचनं तु तत्र नोपयुज्यत इत्याशंक्य[1] शंकाविशेषनिरासेन तदुपयोगं सूचयितुं 'यतश्शिवविष्णोः' इत्यादिवाक्यम्। इयमत्र शंकोत्तिष्ठति। विष्णोः परमं रूपं शिवशक्तिरित्ययुक्तम्। पुराणेतिहासादिषु विष्णोश्शिवाभिन्नत्वस्यैव बहुधा प्रतिपादितत्वादिति। तत्रायं परिहारोऽनेन वाक्येन सूचितः। यतो विष्णोश्शिवात् स्वरूपभेदो नास्ति तत एव विष्णववस्थाप्रकृतिभूतायाः शक्तेरपि शिवात्स्वरूपभेदो नेष्यते। कूर्मपुराणादिषु शिवस्य शक्तेर्विष्णोश्चैक्यप्रतिपादनदर्शनात्। कूर्मपुराणे–'दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च। प्रणम्य देवमीशानं पृष्टवत्यो वराङ्गनाः। कस्त्वं विभ्राजसे कान्त्या

(१) 'त्याशंकाविशेष' इति ख. पाठः।

केयं बाला रविप्रभा। को न्वयं भाति वपुषा पङ्कजायतलोचनः। निशम्य वचमं तासां वृषेन्द्रवरवाहनः। व्याजहार महायोगी भूताधिपतिरव्ययः। अयं नारायणो देवी जगन्माता सनातनी। विभज्य संस्थिता देवी स्वात्मानं बहुधेश्वरम् । न मे विदुः परं तत्त्वं देवाद्या न महर्षयः । एकोऽहं वेद विश्वात्मा भवानी विष्णुरेव च । अहं हि निष्क्रियो धाता केवलो निष्परिग्रहः । मामेव केवलं देवमाहुर्देवीमथाम्बिकाम् ॥' इत्यादिषु बहुषु प्रदेशेषु शिवस्य शक्तेर्विष्णोश्चैक्यं प्रति पादितम् । यत्तु 'त्रिविधां भावनां ब्रह्मन्प्रोच्यमानां निबोध मे । एका मद्विषया तत्र द्वितीयाव्यक्तसंश्रया । अन्या तु भावना ब्राह्मी विज्ञेया सा गुणातिगा । आसामन्यतमां वापि भावनां भावयेद्बुधः । अशक्तस्संश्रयेदाद्यामित्येषा वैदिकी श्रुतिः' इतीन्द्रद्युम्नं प्रति भगवद्वचने 'योगी च त्रिविधो ज्ञेयो भौतिकस्सांख्य एव च । तृतीयोऽत्याश्रमी प्रोक्तो योगमुत्तममाश्रितः । प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना । तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी' इत्युत्तरोत्तरोत्कृष्टत्रिविधयोगिसंन्यासिविभागे च विष्णुशक्तिशिवभावनानामुत्तरोत्तरोत्कृष्टत्वमुक्तम्। यच्चेन्द्रद्युम्नस्य बहुकालं नारायणमुपासितवतः 'संप्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्विकाम्। अवाप परमं योगं येनैकं परिपश्यति । यं विनिद्रा जितश्वासाः कांक्षन्ते मोक्षकाङ्क्षिणः ।' इति तदनन्तरमक्षरशब्दोक्तशक्त्युपासनपूर्वकेन परमेश्वरोपासनेनाद्वितीयब्रह्मसाक्षात्कारोपयोगितन्निदिध्यासनानुष्ठानमुक्तम्। तेन सर्वेणाप्येकस्यैव परब्रह्मणश्शिवशक्तिविष्णुरूपेण स्थितस्य तेन तेन रूपेणोपासनामात्रस्य फलभेदेन भेदस्सिध्यतीति नैतावता तेषां परस्परभेदः शङ्कनीयः । एवमादित्यपुराणादिष्वपि तेषामैक्यप्रतिपादनमुदाहर्तव्यम् । एवं

तावत् 'तदेव शिवाभिधेयं परं ब्रह्म' इति ईक्षतिकर्माधिकरणभाष्येण शक्तिशिवस्वरूपात्मकत्वमुक्तम् । तथा शक्तिशिवस्वरूपात्मकत्वं तदीयसकलगुणगणरूपत्वञ्च 'सर्वत्र प्रसिद्धोपदेशात्' इत्यधिकरणभाष्ये प्रपञ्चितम् । श्रुतिस्मृतीतिहासपुराणाभियुक्तसूक्तिप्रामाण्यात् सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासंविदानंदसत्ता देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः परब्रह्मणश्शिवस्य स्वरूपञ्च गुणश्च भवति । तद्व्यतिरेकेण ब्रह्मणस्सर्वज्ञत्वसर्वशक्तित्वसर्वनियन्तृत्वसर्वोपास्यत्वसर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्वगतत्वञ्च न संभवति । किञ्च, महेश्वरशिवमहादेवरुद्रादिपरमाख्यानामभिधेयत्वञ्च न संभवतीति । परब्रह्मणो निर्विकारत्वं प्रकृत्यधिकरणे शंकोत्तराभ्यां प्रपञ्चितम् । तत्र हि 'नन्वज्ञानविकारास्पदहेयप्रपञ्चरूपेण प्रकृतिभावेन कथं वर्तते निरस्तसमस्तदोषकळंको निस्सीममंगळगुणरत्नाकरो निरंकुशनित्यसिद्धवैभवः प्रपञ्चातीतः परमशिव' इत्याशंकोत्तरत्वेनावतारितस्य 'परिणामात्' इति (ब्र. १. ४. २६.) सूत्रस्य व्याख्यानावसरे 'नित्यशुद्धानन्दस्य निरतिशयमंगळस्वभावस्यापि निमित्तस्य परमशिवस्य प्रकृतित्वेन जगदाकारत्वं युक्तमेव चिदचिदाकारेण परिणामात्' इति सौत्रहेतुवचनस्य शब्दार्थं प्रदर्श्य 'हन्त कारणविकाररूपो हि परिणामः पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणाम इति कथं परमेश्वरोऽनर्थधर्मात् परिभूयते' इति तत्र शंकामुद्भाव्य 'यथा निमित्तस्य प्रकृतित्वेऽपि न विकारादिस्पर्शः, तथा परिणामस्संभवति' इति गूढाभिसन्धितयोत्तरमुक्त्वा 'कोऽयमपूर्वः परिणामः कुतूहलिनो वयं तच्छ्रवणे विविच्यताम्' इति पुनराकांक्षामुद्भाव्य 'शृणु विवेचयाम' इति तदुत्तरोक्तिं प्रतिज्ञाय 'यदातमो' मन्त्रार्थविवरणपूर्वकं शिवस्य

परब्रह्मणः प्रज्ञारूपचिच्छक्तिद्वारकः परिणामस्स तु न स्वरूपतो निर्विकारत्वस्य विरोधीत्युक्तम्। एवं जन्मादिसूत्रभाष्यादिष्वपि ब्रह्मणो निर्विकारत्वमुक्तं द्रष्टव्यम्। इत्थंभूतैराचार्यवचनैर्ब्रह्म वस्तुतो निर्गुणमेव तेषामभिमतं जीववर्गस्तदभिन्नो गगनपवनादिजडवर्गस्तद्विवर्त इत्येव निर्गुणं जीवाभिन्नं निष्प्रपञ्चं शुद्धाद्वैतरूपं ब्रह्म तेषां मतमिति दृढमवगमितम्। चिच्छक्तेर्ब्रह्माभेदे तदीयसकलधर्मरूपत्वे च ब्रह्म हि वस्तुतः स्वव्यतिरिक्तधर्मरहितं निर्धर्मकमित्येव सिध्यति। तथा सकलचेतनप्रपञ्चाकारायाश्चिच्छक्तेर्ब्रह्माभेदे चेतनवर्गस्यापि तदभेदस्सिध्यति। ब्रह्माभिन्नायाश्चिच्छक्तेस्सकलचेतनप्रपञ्चाकारत्वस्याभ्युपगमेऽपि ब्रह्मणस्तदभेदो न सिध्यति। तस्या नित्यवियदादिप्रपञ्चाकारताभ्युपगमे निर्विकरत्वाभ्युपगमविरोधापत्तेः। किञ्च[1] प्रपञ्चस्य ब्रह्मविवर्तत्वमेव सिध्यति। न च ब्रह्मचिच्छक्त्योस्तात्त्विकाभेदेऽपि गार्गिब्राह्मणदहरविद्यानन्दवल्ल्यादिसिद्धस्य धर्मधर्मिभावासनासनिभावादिकृतभेदे[2]व्यपदेशस्याप्यवश्याभ्युपगन्तव्यादद्वैतवादे जीवब्रह्मणोरभेदेऽपि व्यवहारिकभेदाभ्युपगमेन कर्तृत्वभोक्तृत्वतदभावव्यवस्थावत् ब्रह्मचिच्छक्त्योर्निर्विकारत्वसविकारत्वव्यवस्था सिध्यति, अतो न ब्रह्मनिर्विकारत्वाभ्युपगमेन प्रपञ्चस्य ब्रह्मविवर्तत्वसिद्धिरिति वाच्यम्। तथापि परमुक्तिदशायां व्यावहारिकभेदनिवृत्त्या जीवगतकर्तृत्वभोक्तृत्वादिवत् चिच्छक्तिगतजडप्रपञ्चस्यापि निवृत्तेरवश्यवक्तव्यत्वेन ब्रह्मविवर्तत्वसिद्ध्यनिवारणात्। चेतनप्रपञ्चस्य तु जडप्रपञ्चवद्ब्रह्मविवर्तत्वं न सिद्ध्यति। तथात्वे तस्य मुक्तिफलभाक्त्वाभावप्रसंगात् नित्यस्य तस्य ब्रह्माभेदे ब्रह्मनिर्विकारत्वबोधाप्रसंगाच्च। एवञ्च ब्रह्माद्वैताभ्युपगमविषये शं-

१ 'किंतु' इति ख. पाठः। २. 'व्यावहारिकभेदश्च' इति ख. पाठः।

करभगवत्पादीयमतादाचार्यमते न कश्चिद्विशेषः । तन्मतेपि हि ब्रह्मणश्चैतन्यरूपा जगदाकारपरिणामिनी चिच्छक्तिस्तावदस्ति । 'चिच्छक्तिः परमेश्वरस्य विमलं चैतन्यमेवोच्यते तस्यैवास्य जडापरा भगवतश्शक्तिस्त्वविद्यात्मिका। संसर्गाच्च मिथस्तयोर्भगवतश्शक्त्योर्जगज्जायते सच्छक्त्या सविकारया भगवता चिच्छक्तिरित्युच्यते ॥' इति संक्षेपशारीरकोक्तेः । सा च न ब्रह्मव्यतिरिक्ता व्यावहारिकभेदमात्रवती । तदनन्तरमेव 'इत्येवं कथयन्ति केचिदपरे श्रद्धालवस्तत्पुनः कस्याश्चिद्भुवि सम्मतञ्च विदुषां नेष्टञ्च भूम्यन्तरे । कर्मोपास्तिविधानभूमिषु तथा तत्संमतं निर्गुणे तत्त्वे तत्परवेदवाक्यविषये त्वालोचिते नेष्यते' इति संक्षेपशारीरकोक्तेः । तथा तन्मतेऽपि ब्रह्मणो धर्मास्सन्ति व्यवहारदशायां प्रथग्भूताः । 'आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इति पञ्चपादिकोक्तेः । तथा तैरपि व्यवहारसिद्ध्यर्थं प्रसक्तप्रतिषेधसिद्ध्यर्थं च प्रपञ्चस्य परिणामिताभ्युपगमपूर्वकमेव विवर्त्ततापर्यवसानं कृतम् । यथोक्तं संक्षेपशारीरके 'आरम्भसंहतिविकारविवर्तवादानाश्रित्य वादिजनता खलु वावदीति । आरम्भसंहतिमते परिहृत्य वादौ द्वावत्र संग्रहपदं नयते मुनीन्द्रः ॥ तत्रापि पूर्वमुपगम्य विकारवादं भोक्त्रादिसूत्रमवतार्य विरोधनुत्त्यै । प्रावर्त्तत व्यवहृतेः परिरक्षणाय धर्मादिगोचरविधावुपयोगहेतोः ॥ साक्षादिहाभिमतमेव विवर्त्तवादमाहत्य सूत्रयति पूर्वमुपेक्षमाणः । आरम्भणादिवचनेन विवर्त्तवादं शक्नोति वक्तुमुदिते परिणामवादे ॥ आरुह्य भूमिमधरामितराधिरोढुं शक्नोति शास्त्रमपि कारणकार्यभावम् । उक्त्वा पुरा परिणतिप्रतिपादनेन संप्रत्यपोहति विकारमृषात्वसिद्ध्यै ॥ विवर्त्तवादस्य हि पूर्वभूमिर्वेदान्तवादे परिणामवादः । व्यवस्थितेऽस्मिन्

परिणामवादे स्वयं समायाति विवर्त्तवादः ॥ उपायमातिष्ठति पूर्वमुच्चै-रुपेयमाप्तुं जनता यथैवम् । श्रुतिर्मुनींद्रश्च विवर्तसिद्ध्यै विकारवादं वदतस्तथैव ॥ अहं प्रजायेय बहु स्वयं स्यामित्यादिनादौ परिणाममुक्त्वा । विकारमिथ्यात्वमथ ब्रुवन्ती वित्तर्वादं श्रुतिराननिनाय ॥' इति ॥ ४९ ॥

अथ जीवानां ब्रह्माभिन्नत्वस्य जडानां ब्रह्मविवर्त्तत्वस्य चोपपादके सकलचेतनाचेतनप्रपञ्चाकारायाश्चिच्छक्तेर्ब्रह्माभेदे भाष्यसंप्रतिपत्तौ गमकान्तरमुदाहरति—

**आध्यानादिक्रियायां परमशिवपदं प्रेप्सतामान्तराणां**
**ध्येयत्वं वारयित्वा त्यजति विधिबलात्तद्विरोधप्रशान्त्यै ।**
**प्रागानन्दाधिकारे परमशिवमिव ध्येयमुक्तं विमुक्त्यै**
**चिच्छक्त्यात्मानमानंदमयमभिदधुर्भाष्यकारास्तमेव ॥ ५० ॥**

अत्रेयं विषयशुद्धिः । आनन्दादयः प्रधानस्य ' (ब्र. ३.३.११.) इत्यधिकरणे 'यन्निरतिशयज्ञानानन्दादिगुणजातं कृष्णपिंगळत्वविरूपाक्षत्वादिविशिष्टदिव्यमंगळविग्रहवैशिष्ट्यं च परब्रह्मणः स्वरूपलक्षणमिष्यते । तद्ब्रह्मविष्ण्वादिसकलेतरविलक्षणपरब्रह्मप्रतिपत्तये सर्वास्वपि विद्यासु प्रकरणभेदेऽप्युपसंहार्यम्' इति प्रसाध्य तदनन्तरं 'प्रियशिरस्त्वाद्यप्राप्तिः' इत्य(ब्र. ३.३.१२. सू.)धिकरणे 'ब्रह्मधर्मनिरतिशयज्ञानोपसंहृतौ तदवान्तरविशेषाणां सत्यसंकल्पत्वादीनामिवानन्दमयशब्दोक्तनिरतिशयानंदोपसंहारे तदवान्तरविशेषाणां प्रियशिरस्त्वादीनामप्युपसंहारः कार्य' इत्याशंक्य प्रियादीनामानन्दविशेषत्वेऽपि तेषां शिरस्त्वादेर्ब्रह्मानन्दगतनिरतिशयत्वप्रतिपत्तिसौकर्यार्थं कल्पितत्वान्न तेषामुपसंहार' इति प्रसाधितम् । तदनन्तरम् 'आध्यानाय प्रयोजना-

भावात्' (ब्र. ३.३.१४.सू.) इत्यधिकरणे कल्पितत्वात्प्रियशिरस्त्वादीनामननुसन्धेयत्वेऽपि अन्नमयादिकोशचतुष्टयमनुसन्धेयम्। 'यो वेद निहितं गुहायाम्' इति श्रुतेः गुहारूपतदान्तरत्वस्यावश्यानुसन्धेयत्वादित्याशंक्य अन्नमयादयो न शरीरप्राणमनोबुद्धिरूपा अचेतनाः किंत्वथर्वशिखायां 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त' इत्युक्ता देवताविशेषाः 'एतमन्नमयमात्मानमुपसङ्क्रामति' इत्यादिफलवाक्येषु तेषां परब्रह्मप्राप्तेः पूर्वं क्रमप्राप्यचेतनत्वावगमात्। ते चाथर्वशिखायामेव 'शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्य' इति मुमुक्षुकर्तव्यनिरन्तरशिवविषयचिन्तासन्ततिरूपध्यानकाले परित्याज्यत्वेन ध्यानाद्बहिर्व्यावर्तनीयत्वेनोक्ताः। अतो यद्यपि 'ब्रह्मविदाप्नोति परम्' इति श्रुत्युक्तं फलं प्राप्नुवतोऽन्नमयाद्यनुसन्धानफलतया क्रमेण तेषां प्राप्तिः 'एतमन्नमयम्' इत्यादिवाक्येषु श्रूयते। तथापि शिवध्यानारम्भात् प्रागेव तेषामनुसन्धानं पूर्वपूर्वपरित्यागेन कार्यम्। 'सर्वमन्यत्परित्यज्य' इति श्रुतेः पूर्वपूर्वपरित्यागपूर्वकोत्तरोत्तरप्राप्तिरूपफलानुगुण्याच्च। पूर्वपूर्वपरित्यागश्च उत्तरोत्तरस्मिन् पूर्वपूर्वोपसंहारेण कर्तव्यः। तथा शिवागमेषु प्रसिद्धत्वात् योगयाज्ञवल्क्येऽपि ध्यानाध्याये ब्रह्मादीनां क्रमेणानुसन्धानं विधाय तदनन्तरम् 'एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे। ब्रह्मादिकार्यरूपाणि स्वेस्वे संहृत्य कारणे। युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे॥' इति तथैव प्रतिपादितत्वाच्च। एवञ्च क्रमेणान्नमयादीननुसन्दधानः पूर्वपूर्वमुत्तरोत्तरस्मिन् विज्ञानमयं शिवासनरूपे परमव्योम्नि च प्रलीनं भावयित्वा परमव्योममध्यवर्तिशिवैकविषयचिन्तासन्ततिरूपध्यानं कुर्यात्। अयमेव परित्यागश्रुत्यविरोधेन 'गुहायां निहितम्' इति श्रुत्या विवक्षितोऽर्थ इति सिद्धान्तितम्। तदनन्तरमेवं सत्यु-

मासहायत्वमपि तस्य ध्यानकालेऽनुसन्धेयं न स्यात्। सर्वेतरपरित्याग-विरोधात् 'सर्वमन्यत्परित्यज्य' इत्यन्यशब्देनैव प्रकृतब्रह्मविष्णुरुद्रेन्द्रग्रहणसंभवे अधिकस्य सर्वशब्दस्य शिवेतरसर्वदेवतापरित्यागविध्यर्थत्वात्। न चान्नमयशब्दोक्तचिच्छक्त्यात्मिकाया उमायाश्शिवाभिन्नत्वात् परित्यागविधेर्न तद्विषयत्वप्रसक्तिरिति वाच्यम्। 'अन्योऽन्तर आत्मा' इत्यादावन्नमयादिषु श्रुतस्यात्मशब्दस्यानन्दमयेऽप्यविशेषेण तद्वदानन्दमयस्यापि जीवत्वौचित्यात्। अन्यथात्मश्रुत्यविशेषणान्नमयादीनामपि शिवाभेदप्रसङ्गादित्याशङ्कानिराकरणार्थं 'आत्मगृहीतिरितरवदुत्तरात्' (ब्र. ३.३. १६. सू) अन्वयादिति चेत्स्यादवधारणा(ब्र. ३.-३. १७. सू)दिति तस्मिन्नेवाधिकरणे गुणसूत्रद्वयं कृतम्। आद्यसूत्रस्यायमर्थः, आनन्दमये आत्मग्रहणं परमात्मविषयम् 'आत्मन आकाशस्सम्भूत' इति जगत्कारणे आत्मग्रहणवत्। न त्वन्नमयादिष्विव जीवविषयम्। उत्तरसन्दर्भात्। उत्तरत्र ह्यन्नमयादिकमुपसङ्क्रान्तस्यैवानन्दमयमुपसंक्रान्तस्य उपसंक्रमितव्यान्तरोक्त्यभावेन तत्प्राप्तेर्मुक्तिरूपत्वमवगम्यते। तथा च जीवपरसाधारणस्यात्मशब्दस्य तत्र तत्र यथार्हमर्थग्रहणं युक्तम्। अत्रात्मशब्दस्य जीवविषयत्वं नियतं दृष्टमिति प्रायपाठाशंका तु 'इतरवत्' इति सौत्रपदेनैव निरस्ता। तस्मादुमायाः शिवाभिन्नत्वात् शिवध्यानकाले तदनुसन्धानं न विरुध्यत इति। नन्वेवमन्नमयादिशब्दोक्तानां ब्रह्मादीनामपि पूर्वापरवाक्ययोः परमात्मपरतया क्लृप्तेनात्मशब्देनान्वयात्तेषामपि शिवध्यानकालेऽनुसंधानं भवेदिति शंकानिराकरणार्थं द्वितीयसूत्रम्। तस्याप्ययमर्थः। 'अन्योऽन्तर आत्मानन्दमय' इत्यानन्दमयस्य शिवाभिन्नस्यान्नमयादिभ्यो भिन्नत्वावधारणात् अन्नमयादीनां शिवाभेदो नोपपद्यते। नन्वानन्दमयश-

ब्दोक्तायास्सकलचेतनाचेतनप्रपञ्चाकारायाः शक्तेश्शिवाभेदेन तद्भिन्नानां प्रकृतब्रह्मादिशब्दोक्तचेतनानामपि शिवाभेदः स्यादेवेति तेषां परित्यागोक्तिरर्धजरतीयन्यायावलंबनैवेति चेन्न । 'सर्वमन्यत्परित्यज्य' इत्यवधारणदर्शनात् । तस्यावधारणस्य प्रकृतब्रह्माद्यविषयत्वे हि कस्तस्य विषयः स्यात् । नाचेतनवर्गः प्रकृतब्रह्मादिव्यतिरिक्तचेतनवर्गो वा । अन्यशब्दस्य सर्वनामशक्तिस्वाभाव्येन प्रतियोगिभूतशिवसदृशबुद्धिस्थब्रह्मादिचेतनपरत्वावश्यंभावात् चेतनान्तराणामपि ब्रह्मादिवत् शिवाभिन्नत्वेन तद्विषयत्वेऽप्यनुपपत्तितौल्याच्च । तस्माद्वस्तुतः शिवाभिन्नस्य चेतनस्य परित्यागोऽत्र न विधेयः । किं तु शिवात् भेदेन प्रतीयमानस्य । अत एव ब्रह्मविद्यासु शिवोऽहमिति शिवाभेदेनानुसन्धेयस्य स्वात्मनो न परित्यागः । अतः प्रतिपर्यायं 'अन्योऽन्तर आत्मा' इति श्रवणादन्नमयादीनां शिवात् परस्परस्माच्च भेदप्रतीतेस्तेषां परित्यागः । उमायास्तु यद्यपि 'परमे व्योमन्' इति 'स एको ब्रह्मण आनन्द' इति च भेदः प्रतीयते । तथाप्यासनरूपेण निरतिशयानन्दरूपेण च सा भेदप्रतीतिर्न त्वंबिकात्मकचेतनरूपेण । तेन तु रूपेणाभेद एव प्रतीयते । 'पुरुषं कृष्णपिंगळम्' इत्यस्य सर्वविद्यासूपसंहृतेरानन्दाधिकरणे समर्थितत्वेन 'कृष्णपिंगळम्' इत्यनेन शिवस्यैवांबिकामूर्त्या कृष्णवर्णत्वं पुरुषमूर्त्या रुक्मवर्णत्वमिति शिवशक्त्यभेदगर्भीकरणात् । तस्मादुमाया इवान्नमयादीनां शिवध्यानकालेऽनुसन्धानं न कार्यमिति । एवमिहानन्दमयरूपा चिच्छक्तिः परमात्मा शिव एव ततो न भिद्यते इत्याचार्यैः आत्मग्रहीतिसूत्रार्थत्वेन वर्णितम् । न च तद्भाष्यमानन्दमयः परमात्मा शिव इत्यानन्दमयाधिकरणप्रथमपक्षमाश्रित्यानन्दमयस्य परमात्मत्वसाधनपरं न त्वानन्दमयश्शक्तिरिति तदधिकरणद्वितीयपक्ष-

माश्रित्य शक्तेः परमात्माभेदसाधनमिति वाच्यम् । प्रथमपक्षाश्रयणे आनन्दमयः परमात्मेत्यस्यार्थस्यानन्दमयाधिकरण एव सिद्धत्वेन तत्र तत्साधनस्यानपेक्षितत्वादानन्दमयाधिकरणद्वितीयपक्ष एव भाष्यकाराभिमत इति जन्मादिसूत्रभाष्येण स्पष्टमवगतत्वाच्च । तस्मादाध्यानाधिकरणे भाष्यकारैश्शक्तेश्शिवाभेदः प्रसाधितः समञ्जस एव ॥५०॥

अथ जीवब्रह्माभेदो भाष्यकाराभिमत इत्यत्र गमकान्तरमुदाहरति—

**आचार्यास्तत्र तत्र व्यधुरधिकरणे पूर्वपक्षावलंबं**
**जीवब्रह्माविभेदप्रमितिकरवरैस्तत्त्वमस्यादिवाक्यैः ।**
**तत्सिद्धान्तेष्वकार्षुः कथमपि न पुनस्तत्र तात्पर्यभंगं**
**प्रत्याचख्युस्तमंशाधिकृतिकृतमथाहंग्रहाधिक्रियायाम् ॥ ५१**

जीवब्रह्माभेदप्रमाणमूर्धन्यानि 'तत्त्वम'स्यादिवाक्यानि केषुचिदधिकरणेषु पूर्वपक्षावलंबनत्वेन भाष्यकारैरुदाहृतानि । यथा—प्रथमाधिकरणे 'जीव एव ब्रह्म स च सर्वेषामसन्दिग्धाविपर्यस्तप्रत्यक्षानुभवसिद्ध इति तस्याविचारणीयत्वात् ब्रह्मविचारात्मकं शास्त्रं नारंभणीय'मिति पूर्वपक्षस्य, तृतीयपादाकाशाधिकरणे 'नामरूपनिर्वोढृत्वेन श्रुत आकाशो न भूताकाशो जीवो वा किंतु परमेश्वर' इति निर्णयार्थं प्रवृत्ते जीवातिरिक्तपरमेश्वराभावात् निर्विषयस्सिद्धान्त' इति पूर्वपक्षस्य 'सुषुप्त्युत्क्रान्त्योर्भेदेन । (ब्र. १. ३. ४२. सू.) पत्यादिशब्देभ्यः (ब्र. १. ३. ४४. सू.) इति गुणसूत्राभ्यां निवर्तनीयस्य, आरंभणाधिकरणे 'वेदान्तेषु जीवस्य ब्रह्मानन्यत्वव्यपदेशात् ब्रह्मणो जगत्स्रष्टृत्वांगीकारे स्वाभिन्नस्य जीवस्य जगत्सृष्टिर्हिता जगत्सृष्टिरहितेति जानतस्तस्य हिताकरणमहितकरणञ्च प्रसज्येते'ति पूर्वपक्षस्य 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' इति (ब्र. २. १. २१.) सूत्रेण

उद्धाव्य 'अधिकं तु भेदनिर्देशात् (ब्र. २. १. २२. सू.) अश्मादिवच्च तदनुपपत्तिः' इति (ब्र. २. १. २३.) सूत्राभ्यां निवर्तनीयस्य, पुरुषार्थाधिकरणे जीव एव ब्रह्मेति तद्ज्ञानस्य कर्तृसंस्कारद्वारा क्रत्वर्थत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादितत्फलश्रवणं 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति दीक्षितांजनफलश्रवणमिवार्थवाद' इति पूर्वपक्षस्य 'शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः' इति (ब्र. ३. ४. २.) सूत्रेणोद्धाव्य 'अधिकोपदेशात्तु बादरायणस्यैवं दर्शनात्' इति (ब्र. ३. ४. ८.) सूत्रेण निवर्तनीयस्य चावलंबनत्वेन पूर्वपक्षभाष्येषु महावाक्यान्युदाहृतानि। तत्तत्सिद्धान्तभाष्येषु तु तानि जीवब्रह्माभेदपराणि न भवन्ति किंतु 'ब्राह्मणो विद्वान्' इतिवदपृथक् सिद्धपराणि 'वाचं धेनुम्' इतिवदुपासनापराणि वेति न काप्युक्तम्। यद्यपि 'अंशो नानाव्यपदेशात्' (ब्र. २. ३. ४२. सू.) इत्यधिकरणे ब्रह्मैवोपाधिवशात् जीवभावमापद्यत इति पूर्वपक्षनिराकरणार्थे प्रवृत्ते "'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिकाद्व्यपदेशात् तयोर्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वम्' इति सिद्धान्तभाष्येण योगिशरीराणां व्यापनीयानां तद्व्यापकस्येव योगिनश्च यथा व्याप्यव्यापकभावेनापृथक्सिद्धिरूपमनन्यत्वं तथा जीवानां ब्रह्मणश्चेत्यर्थकेन महावाक्यान्यनन्यपराणि न तु जीवब्रह्माभेदपराणीत्युक्तमेव। तथापि 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र. ४. १. ३. सू.) इत्यहंग्रहाधिकरणे महावाक्यानामभेदपरत्वव्यवस्थापनेनाचार्यैरेव तत्प्रत्याख्यातम्। तत्र हि 'विश्वाधिको रुद्रो महर्षिः'। 'अधिकं तु भेदनिर्देशात्' इत्यादिश्रुति (ब्र. २. १. २२.) सूत्रेषु प्रत्यगात्मनः पशोर्जीवात्पत्युः परब्रह्मणोऽधिकत्वेन निरूपितत्वादज्ञत्वसर्वज्ञत्वादि-

गुणैर्न्यूनाधिकभावस्य संप्रतिपन्नत्वाच्च मुमुक्षुभिर्ब्रह्मोपासनं स्वशेषित्वादिप्रकारेण स्वभिन्नतयैव कार्यं न तु स्वात्मतयेति पूर्वपक्षनिराकरणार्थं प्रवृत्ते सिद्धान्तभाष्ये 'यद्यपि जीवदाधिकमेव शिवाख्यं परं ब्रह्म तथाप्युपासिता 'अहं ब्रह्मास्मि' इति तदुपासीत, यतः पूर्वेऽप्युपासितारः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यात्मेत्येवावगच्छन्ति। उपासितुरर्थान्तरत्वेऽपि तानुपासितॄननुगृह्णाति स्वस्वरूपतया परं ब्रह्म, ते च पुनः स्वात्मतया ग्राहयन्ति च परानपि शिष्यान् 'तत्त्वमसि' इत्यादिना" इति। अत्र 'तत्त्वमस्या' दिवाक्यानामभेदार्थत्वप्रदर्शनेन प्रागुक्तं शरीरशरीरिभावकृतापृथक्सिद्ध्यर्थत्वं प्रत्याख्यातमिति स्पष्टमेव। तदुपपादनार्थमेव 'त्वं वा अहमस्मि' इति जाबालवाक्यमुदाहृतम्। यदि शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं तदानीम् 'अहं वै त्वमसि' इति निर्देश एवोपपद्यते। त्वंशब्दनिर्दिष्टे परमेश्वरे स्वशरीरकत्वपर्यन्तस्याहंशब्दस्य वृत्त्युपपत्तेः। 'त्वं वा अहमस्मि' इति निर्देशस्तु नोपपद्यते। अहंशब्दनिर्दिष्टे परमेश्वरशरीररूपे स्वस्मिन्परमेश्वरवाचिनस्त्वंशब्दस्य वृत्त्यनुपपत्तेः। शरीरवाचिनां हि शरीरिपर्यन्तत्वं व्युत्पत्तिसिद्धं न तु शरीरिवाचिनां शरीरपर्यन्तत्वम्। अतो भेदाभेदशंकानिराकरणेनाभेददार्ढ्यार्थं परस्पराभेद एवात्र बोध्यः। न च वाक्यद्वयेऽपि त्वंशब्दौ प्रस्तुतगुणविशिष्टपरमेश्वरविषयौ अहंशब्दौ स्वशरीरकत्वविशिष्टपरमेश्वरविषयाविति वाक्यद्वयमपि एकरूपार्थपरमिति वाच्यम्। तदानीं 'त्वं वा अहमस्मि' 'अहं वै त्वमसि' इति व्यवस्थितयुष्मदस्मच्छब्दपौर्वापर्यास्म्यसिशब्दप्रयोगकृतवाक्यद्वयवैलक्षण्यवैयर्थ्यापत्तेः, एकेनैव वाक्येन स्वान्तर्यामिणः परमेश्वरस्य चाभेदसिद्धौ वाक्यान्तरवैयर्थ्यापत्तेश्च। न चाभेदप्रतिपत्तिदा-

ढ्यार्थं वाक्यद्वयं, जीवपरमेश्वरयोरिवान्तर्यामिपरमेश्वरयोर्भेदभ्रान्त्यभावेन तद्दार्ढ्योपादनस्यानपेक्षितत्वात् इत्येवं प्रकारेण तत्र जीवपरमेश्वराभेदार्थकत्वं स्पष्टम् । अतस्तदनुसारेण तत्त्वमस्यादिवाक्यानामप्यभेदार्थकत्वमेव युक्तमित्येवं तदुपपादनं कृतं भवति । किञ्च । तत्त्वमसिवाक्यच्छाययापि तस्याभेदार्थकत्वमवसीयते । तर्हि त्वंशब्दनिर्दिष्टे प्राग्वर्णितजगत्कारणत्वादिविशिष्टपरमेश्वराभेदो बोध्यत इत्यसिशब्दान्वयस्वारस्यादवसीयते । अतस्तत्र त्वंशब्दस्संबोध्यजीवमात्रपरः न तु तदन्तर्यामिपर इत्यभ्युपगन्तव्यम् । संबोध्यं प्रति स्वात्मन इव स्वान्तर्यामिणः स्वानुभवेन प्राचीनोपदेशेन वा प्रसिद्धत्वाभावेन तस्य तं प्रत्युद्देश्यतानर्हत्वात् प्रकृतस्य सद्रूपस्य परमेश्वरस्य प्रागुपदिष्टत्वसमर्थने तत्र तद्भेदशंकानुदयेन तदभेदबोधानपेक्षणात् । अतस्तत्त्वमसिवाक्यं जीवब्रह्माभेदपरमित्येव युक्तम् । एतत्सर्वमभिप्रेत्यैव भाष्याकारास्तस्मिन्नधिकरणे 'ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यान् 'तत्त्वमसि' इत्यादिनेत्येतदनन्तरं 'निरवधिकपरमानन्दमयनिष्कळंकशिवत्वप्राप्तिर्हि मुक्तिः। शिववत्वप्राप्तिरात्मनः पशुत्वनिवृत्तिमन्तरेण न भवति । पशुत्वनिवृत्तिश्च न तद्भावनां विना । अतो निरन्तरं शिवोऽहमिति भावनाप्रवाहेण शिथिलितपाशतयापगतपशुभावः उपासकश्शिव एव भवति' इति ग्रन्थसन्दर्भेण शिवाभेदभावनां विना न मुक्तिरिति व्यवस्थापपयामासुः । 'अत एव तदन्यस्य मुमुक्षुध्येयत्वं निषिध्यते 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य' इत्यादिश्रुतिषु' इति ग्रन्थेनांशाधिकरणे प्रदर्शितं तत्त्वमसिवाक्यार्थमवलंब्य स्वशेषित्वादिप्रकारेण स्वभिन्नत्वेन ब्रह्मोपासना कार्येति शंकामितरपरित्यागश्रुतिविरोधेन

निराचक्रुः । तत्त्वमस्यादिवाक्यानां शरीरशरीरिभावार्थकत्वाभावेऽप्यारोपितभेदोपासनाविधिपरत्वमस्त्विति शंकाञ्च 'निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतिशयस्वरूपानन्दसाक्षिस्वप्रकाशशिवरूपपराहंभावापत्तिर्मुक्तिः' इति ग्रन्थेनारोपितार्थास्पर्शिन्यां मुक्तबुद्धावप्युपासनाकालाभ्यस्ताभेदभावनाप्रकर्षजवासनादार्ढ्यप्रयुक्तशिवाहंभावानुवृत्त्युक्त्या निराचक्रुः । तस्मात् जीवब्रह्माभेदेऽप्याचार्याणां संप्रतिपत्तिरसन्दिग्धा ॥ ५१ ॥

नन्वेवमाचार्याणां व्यवहारदृष्ट्या परिणामाभ्युपगमस्य तत्त्वदृष्ट्या विवर्त्ताभ्युपगमस्य जीवब्रह्माभेदाभ्युपगमस्य चाद्वैतवादिमतादविशेषे किमर्थः प्रस्थानान्तरतया पृथग्भाष्यारंभ इत्याशंक्याह—

**शुद्धं ब्रह्माद्वितीयं कथमपि हृदयं नाधिरोहेत्सुसूक्ष्मं**
**तत्र स्थैर्याय बुद्धेस्तनुगुणमहितं तच्चिरं ध्येयमादौ ।**
**इत्यार्यैर्भक्तिसिद्ध्यै सगुणमिह परं ब्रह्म नान्यत्ततोऽस्ती-**
**त्येवं वेदान्तवाक्यैस्सह तदनुगुणं योजितं सूत्रजातम् ॥**

निर्विशेषं ब्रह्म साक्षात्काराय ध्यातव्यमतिसूक्ष्मत्वात् पुरुषप्रयत्नेन कथञ्चिदपि हृदयं नाधिरोहेदिति तत्र बुद्धिस्थैर्यं दृढभक्तिपूर्वकचिरनिरन्तरोपासनाराधितस्यानन्तमङ्गळगुणविशिष्टविग्रहविशिष्टस्य सांबशिवरूपस्य तस्यैव प्रसादेन लंभनीयम् । 'स नो बुद्ध्या शुभया संयुनक्तु' इति श्रुतेः 'ईश्वरात् ज्ञानमन्विच्छेत्' इति स्मृतेः 'ईश्वरानुग्रहादेषां पुंसामद्वैतवासना । महाभयकृतत्राणा द्वित्राणामेव जायते' इत्यभियुक्तोक्तेश्च । अतस्तत्र भक्त्यतिशयसिद्धये 'तदेव परं ब्रह्म नापरमस्य तात्विकं रूपमस्ति' इति प्रतिपादनार्थं प्रवृत्तैराचार्यैस्तदानुगुण्येन वेदान्तवाक्यानां ब्रह्मसूत्राणां च योजनां प्रदर्शयितुमिदं

भाष्यं प्रवर्तितमित्यर्थः ॥ ५२ ॥

ननु, शङ्करभगवत्पादैरुपपादितया रीत्या वस्तुतो निर्विशेषं ब्रह्मेत्यभ्युपगतं चेत् वेदान्तानां सविशेषपरतया योजनमयुक्तम्। सर्वेषां वेदान्तानामद्वैते निर्विशेषे ब्रह्मणि तात्पर्यमित्येव तैरंगीकृतत्वात् तद्व्यतिरेकेण तस्मिन्प्रमाणान्तराभावात् सविशेषपरतया योजनं भक्त्यर्थं कल्पितार्थविषयमर्थवादमात्ररूपमित्यभ्युपगतञ्चेत् ध्यानास्पदसविशेषब्रह्मांगीकरणमयुक्तं, वेदान्तव्यतिरेकेण तत्रापि प्रमाणान्तराभावादित्याशंक्याह—

**यद्ध्यानप्रक्रियायां न पठितमथ यन्निर्गुणप्रक्रियायां**
**दिव्यं देहं गुणान्वा श्रुतिषु कथयति ब्रह्मणो वाक्यजातम् ।**
**तात्पर्यं तेषु तस्यान्तरमभिदधते देशिकेन्द्रास्ततस्ते**
**शुद्धाद्वैतेऽपि साध्ये स्वयमधिकृतिषु ब्रह्मलिंगान्यवोचन् ॥**

सत्यं सर्वेषां वेदान्तानां निर्विशेषे ब्रह्मणि महातात्पर्यमिति, तथापि सगुणविद्याप्रकरणेषु ध्यानार्थं परब्रह्मणो यद्दिव्यविग्रहप्रतिपादनं यच्च दिव्यमंगळगुणप्रतिपादनं यच्च निर्गुणविद्याप्रकरणेषु तस्य स्तुत्यर्थं प्रतिपत्त्यर्थं वा तदुभयप्रतिपादनं तस्य सर्वस्यापि तदुभयविषयमवान्तरतात्पर्यमस्त्येव । अत एव 'अन्तस्तद्धर्मोपदेशात्' इति (ब्र. १. १. २१. सू) अधिकरणे 'स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इति भाष्येण 'हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी' इत्यादिवाक्यप्रतिपन्नविग्रहसद्भावं प्रतिपादयता 'व्यतिहारो विशिंषन्ति हीतरवत्' (ब्र. ३. ३. ३६. सू) इत्यधिकरणे 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति' इति भाष्येण 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासस्सत्य-

कामस्सत्यसंकल्प’ इत्यादिवाक्यप्रतिपन्नगुणगणसद्भावं प्रतिपादयता च तेषां वाक्यानां ब्रह्मध्यानप्रकरणपठितानामपि ब्रह्मणो विग्रहगुणगणयोरवान्तरतात्पर्यमस्तीति भगवत्पादैर्विभावितम्। तुल्यन्यायतया निर्गुणप्रकरणेषु जीवादिव्यावृत्तं तत्प्रतिपत्त्युपायत्वेन तत्स्तुत्यर्थत्वेन वा गुणादिसमाम्नानस्यापि ‘सर्वस्य वशी सर्वस्येशान’ इत्यादेस्तत्रावान्तरतात्पर्यमस्तीत्यंगीकृतमेव। अत एव ‘अक्षरमंबरान्तधृतेः।’ (ब्र. १. ३. ९. सू) ‘आनन्दमयोऽभ्यासात्’ (ब्र. १. १. १३. सू) ‘सुषुप्त्युत्क्रान्त्योर्भेदेन।’ (ब्र. १. ३. ४३. सू) ‘अत्ता चराचरग्रहणात्।’ (ब्र. १. २. ९. सू) ‘अदृश्यत्वादिगुणको धर्मोक्तेः’ (ब्र. १. २. २२. सू) इत्याद्यधिकरणेष्वानन्दवल्ल्यादीनां जीवपरत्वादिव्यवच्छेदेन निर्विशेषब्रह्मपरत्वनिर्णयार्थं प्रवृत्तेषु सर्वस्रष्टृत्वसर्वप्रशासितृत्वसर्वाधिपतित्वसंहर्तृत्वादीनि जीवादिव्यावृत्तानि ब्रह्मलिंगानीति तैरेवोपन्यस्तम्। यथा ‘अन्तस्तद्धर्मोपदेशात्।’ (ब्र. १. १. २१. सू) ‘अन्तर उपपत्तेः’ (ब्र. १. २. १३. सू.) इत्याद्यधिकरणेषु अन्तरादित्यादिविद्यानां जीवपरत्वादिव्यवच्छेदेन सविशेषब्रह्मपरत्वनिर्णयार्थं प्रवृत्तेषु निरंकुशैश्वर्यवामनीत्वभामनीत्वादीनि निर्वृत्तब्रह्मलिंगानीत्युपन्यस्तम्। एवमादिभिराचार्यव्यवहारैस्सविशेषप्रतिपादकवाक्यानां तत्रावान्तरतात्पर्यं तदभिमतमित्येव उन्नीयते। तेषां निर्विशेषब्रह्मणि महातात्पर्यं संक्षेपशारीरके व्यवस्थापितम्---‘सगुणवाक्यमपीह समन्वितं भवति निर्गुणवस्तुनि सर्वशः। न खलु निर्गुणवस्तुसमन्वयं न सहते सगुणेऽस्य समन्वयः॥ सत्यासत्यवपुस्तथाहि सगुणं ब्रह्मास्य विद्या तथा तद्वत्तद्विषयस्य वेदवचसस्तात्पर्यमेवंविधम्। तेनावान्तरमस्य वेदवचसस्तात्पर्यमन्यादृशञ्चान्यन्निर्गुणवस्तुतत्त्वविषयं संकीर्त्यते भागशः॥’ इति।

तस्मात् सर्वेषां वेदान्तानां महातात्पर्येण तात्विकस्य निर्विशेषस्य ध्यानप्रकरणगतानां निर्गुणप्रकरणगतानाञ्च सगुणवाक्यानामवान्तरतात्पर्येण तात्त्विकातात्विकवपुषस्सविशेषस्य च सिद्धेर्युक्त एव भाष्यकाराणां सविशेषनिर्विशेषोभयरूपब्रह्माभ्युपगमः ॥ ५३ ॥

ननूक्तरीत्या सगुणवाक्यानां सविशेषेऽवान्तरतात्पर्यमस्तीति तेषां तत्परतया योजनां प्रदर्शयन्ति भाष्यवाक्यान्युपपद्यन्तां नाम । सगुणवाक्यानां यदेकवाक्यतया निर्विशेषे महातात्पर्यं समर्थनीयं, तेषाम् ' एकमेवाद्वितीयम् ' ' वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' ' अथात आदेशो नेति नेति ' ' न ह्येतस्मादिति नेत्यन्यत्परमस्ति ' इत्यादिवाक्यानां सविशेषपरतया योजनमिह भाष्ये कृतं दृश्यते । तत्कथमुपपादनीयम् । तत्सर्वं सगुणविषयभक्तिदार्ढ्यप्रयोजनकमौपचारिकमर्थवादमात्रमित्युपपाद्यते चेदस्तु तथा । तथापि ' तत्त्वम ' स्यादिमहावाक्यानां शरीरशरीरिभावरूपस्वस्वामिभावोऽर्थ इति तदर्थवर्णनाय मार्गान्तरकल्पनमयुक्तम् । दहराद्युपासनानां जीवब्रह्माभेदगोचरत्वस्यैव सिद्धान्तसम्मतत्वात् । यद्यपि तत् पश्चादभेदार्थकथनेन प्रत्याख्यातं, तथाप्यंशाधिकरणव्यवस्थापितार्थोपपादनावसरे कृतस्य तथार्थकल्पनस्य किञ्चित् फलं वक्तव्यमित्याकांक्षायामाह—

**नैर्गुण्यादिश्रुतीनां सगुणपरतया योजनं भाक्तमस्तु**
**स्वस्वामित्वार्थपद्याविरचनमफलं तत्वमस्यादिवाचाम् ।**
**जीवस्य ब्रह्मणश्च ह्युदितमभिदयोपासनं सत्यमेतत्**
**स्थूलानां दासमार्गप्रपदनरुचये तेषु वक्तव्यमुक्तम् ॥ ५४ ॥**

येषां मोक्षः परमपुरुषार्थ इत्यवगम्य तं प्राप्तुमभिलषतामपि

साक्षान्मोक्षोपयोगितत्त्वावबोधार्थे श्रवणमननपूर्वके निर्विशेषे निदिध्यासने तदपेक्षितात्यर्थचित्तैकाग्र्यादिसंपादनद्वारा तदुपयोगिनि दहरविद्यादिरूपे सविशेषोपासने वा सामर्थ्यादिरूपस्य लौकिकस्य शास्त्रीयस्य वा अधिकारिविशेषणस्य वैकल्यान्नाधिकारपौष्कल्यं तानधिकृत्य प्रवर्तितो दासमार्गः । येन मार्गेण शिवं प्रपन्नानां शिवप्रसादस्वीकरणं योग्यम् । अत एवोक्तं कामिके शिवप्रसादस्वीकरणमधिकृत्य—'मच्चिह्नधारिणो लोके देशिका मत्परिग्रहाः । मदेकशरणास्तेषु योग्यं नैवान्यजन्तुषु । स्वाद्यानि चादनीयानि पेयान्यन्यानि यानि च । देयानि तानि वै शंभोरश्नीयाद्दासभावतः । दासमार्गप्रपन्ना ये शैवे पाशुपते स्थिताः । तैरेव पेयं भोज्यञ्च घ्रातव्यञ्च मुमुक्षुभिः ॥' इति । वायुसंहितायामपि 'निवेदितं वा भुञ्जीत तच्छेषं वात्मशुद्धये' इत्यधिकृत्योक्तं 'न तु तत्र शिवोऽस्मीति बुद्धिं कुर्याद्विचक्षणः' इति । एवञ्च येन केनापि प्रकारेण येषां शिवभजनं नास्ति तैस्सर्वैश्शिवप्रसादस्वीकरणं न कार्यम् । 'योग्यं नैवान्यजन्तुषु' इति निषेधात् । ये त्वभेदोपासनादिरूपे दासमार्गादुत्तमाधिकारे स्थितास्तैरप्यन्तःकरणशुद्ध्यर्थं रोगापमृत्युनिवृत्त्याद्यर्थं वा शिवप्रसादस्वीकरणं तस्यां दशायां दासभावनयैव कार्यम् 'न तु तत्र शिवोऽस्मीति बुद्धिं कुर्याद्विचक्षण' इति विशिष्य तस्यां दशायामभेदभावनानिषेधेन उपासनादिसमयेष्वभेदभावनावतामपि प्रसादस्वीकरणानुमितिविभावनात्, शिवं प्रति पशुत्वरूपस्य शिवदास्यस्याजानसिद्धस्याभेदभावनाविरोधात् विद्यानुष्ठानकालेष्वननुसन्धीयमानस्यापि आमोक्षमनुवृत्तेश्च । एवमुपासनाद्यनधिकृताः स्थूलबुद्धयोऽस्मिन् दासमार्गे प्रवर्तनेनानुग्राह्या इति तेषां रुचिमुत्पादयितुं दासमार्ग एव सर्वस्यापि मोक्षशास्त्रस्यार्थ इति तदाचार्यैस्तेषु यद्वक्तव्यमस्ति तदपि

क्वचित् प्रदर्शनीयमित्यभिप्रेत्य 'तत्त्वम' स्यादिवाक्यानां शरीरशरीरिभावरूपस्वस्वामिभावोऽर्थ इति मार्गान्तरमंशाधिकरणे कल्पितम्। ननु, मोक्षशास्त्ररूपेऽस्मिन् भाष्ये दासमार्गस्य दहराद्युपासनामार्गस्येव मोक्षोपयोगित्वमस्तीति चेत्तत्र रुच्युत्पादनाय तस्य सकलवेदान्तार्थत्वप्रदर्शनप्रकारकल्पनं युज्यते। न तु तस्य तदस्ति। तत्क्रतुन्यायेन तस्य 'गीतिज्ञो यदि योगेन न गच्छेत्परमं पदम्। रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥' इति स्मृत्युक्तप्रकारेण चित्तैकाग्र्यसंपादनद्वारा योगानुष्ठाने पर्यवसानं प्राप्तस्य गीतिपरिज्ञानस्येव गाणापत्यादिरूपहिमगिरिकैलासादिरूपस्थानगतशिवकैंकर्यपदप्राप्तिफलहेतुत्वात् तत्क्रतुन्यायविरोधेन दासभावनया दास्यकर्मणस्तन्निवृत्तिरूपमुक्तिफलकत्वासंभवादिति चेन्मैवम्। तत्क्रतुन्यायेन दासमार्गप्रपत्त्या तदनुगुणगाणापत्यादिफलप्राप्त्यनंतरं तत्रैवोपासनादिक्रमेण मोक्षप्राप्तिसंभवात्। न चायमैकान्तिको नियमः 'दासकर्म दास्यनिवृत्तिहेतुर्न भवति' इति। 'यो वैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात्। स दासत्वाद्विमुच्येत पुत्रभावं लभेत वा ॥' इति दासकर्मण एव स्वामिनः प्राणसंरक्षणस्य दास्यनिवृत्तिहेतुत्वस्मरणात्। तस्माद्युक्तमुक्तं 'दासमार्गप्रपदनरुचये तत्त्वमस्यादिवाचामर्थान्तरकल्पनम्' इति ॥ ५४ ॥

ननु, सगुणोपासने तद्दास्ये वा प्रपदनार्थं तत्र रुच्युत्पादनं कार्यञ्चेत् पुराणेतिहासादिप्रतिपादितेन प्रकारेण सगुणस्य परमेश्वरस्य विविधो महिमा प्रख्यापनीयः। साक्षान्मोक्षकारणभूतनिर्विशेषब्रह्मावबोधोपयोगितया च तदुपासनादिकं प्रशंसनीयम्। एवं सत्यमार्गावलंबने कर्तुं शक्ये किमर्थं 'सगुणमेव ब्रह्म ततः परं निर्गुणं तत्वान्तरं नास्ति तत्रैव सर्वेषां वेदान्तानां तत्तदर्थनिर्णायकशारीरकसूत्राणाञ्चा

तात्पर्यं तद्विरुद्धाभ्युपगमश्चायुक्त' इति कल्पितमार्गाश्रयणं कृतमि-
त्याशंक्य पूर्वेषामप्यृषीणामेवं शैली दृष्टेत्याह—

**कर्मानुष्ठानभूम्ना भवभयहरिणी चित्तशुद्धिर्भवेदि-**
**त्येष्वादावादरार्थं खलु परिहरणं मोक्ष्यमाणाश्रमाणाम् ।**
**यत्नाद्वेदर्षिवाक्यैस्तदनुगुणनयैस्साधितं कल्पसूत्रे**
**तद्वद्भाष्येऽत्र योज्यं गुणबहुमतये दूषणं निर्गुणस्य ॥ ५५ ॥**

यज्ञादिकर्मानुष्ठानार्थं कल्पसूत्रं प्रणीतवद्भिरापस्तंबाचार्यैर्यज्ञा-
द्यनुष्ठानरहितस्य सन्यासाद्याश्रमान्तरस्य श्रुतिस्मृतिन्यायोदाहरणपूर्व-
कमतियत्नेन दूषणं कृतं दृश्यते । तत्र तावत् 'अथ पुराणे श्लोका-
वुदाहरन्ति—अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः । दक्षिणेना-
र्यम्णः पन्थानं ते श्मशानानि भेजिरे ।' (प्र० २. प० ९. ख०
२३. सू० ३.) 'अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः । उत्त-
रेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते ।' (सू० ६.) 'इत्यूर्ध्वरेतसां
प्रशंसा । (सू० ५.) 'अथापि संकल्पसिद्धयो भवन्ति' (सू० ६.)
'यथा वर्ष प्रजा दानं दूरेदर्शनं मनोजवता यच्चान्यदेवं युक्तम् ।'
(सू० ७.) 'तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके
ब्रुवते ।' (सू० ८.) इति गार्हस्थ्यादुत्कृष्टान्याश्रमान्तराणीति पूर्वपक्षः
कृतः । ततः 'त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि
श्रूयन्ते ।' (सू० ९.) 'व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः
कार्यमिति तर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते' (सू० १०.) इति
सन्दर्भेण सर्वेषु वेदेषु सर्वासु शाखासु तात्पर्यतो विधीयमानाना-
मग्निहोत्रादिकर्मणां गार्हस्थ्य एव सद्भावात् तत्त्यागवानाश्रमान्तराचार-
स्सकलश्रुतिविरुद्धत्वादप्रमाणमिति वैदिकानां मर्यादेति स्वसिद्धान्तमु-

पक्षिप्य 'ते श्मशानानि भेजिरे' इति गार्हस्थ्ये तदुद्भावितस्य दूषणस्य निराकरणार्थमुक्तं 'यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसंस्कारो विधीयते' (सू० ११.) 'ततः परमनन्तं फलं स्वर्ग्यशब्दं श्रूयते' (सू० १२.) इति न गृहस्थानां श्मशानेऽपि केवलं प्रतिक्षेपः श्रूयते न वा ते पिशाचा भूत्वा श्मशानं सेवन्ते । किंतु नानाकर्मणामग्निहोत्रादीनामन्ते श्मशाने पितृमेधाख्यः पुरुषसंस्कारः क्रियते। तस्य कर्मणोऽनन्तरं तेषामक्षय्यं स्वर्गशब्दवाच्यं महाफलं श्रूयते इत्यनेनोक्तम् । अनेनोर्ध्वरेतस एवामृतत्वाय कल्पन्त इति यदुक्तं तस्यापि प्रतिक्षेपः कृतः । पुनरपि तेषामेवामृतत्वमिति पूर्वपक्षप्रतिक्षेपाय प्रमाणान्तरं वक्तुमारब्धम् 'अथाप्यस्य प्रजातिममृतमाम्नाय आह । प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति (ख० २४. सू० १) अनेनोदाहृतेनाम्नायेन मनुष्यं प्रति प्रजायां जायमानायां तद्रूपेण त्वमेव जायसे, अतो न त्वं म्रियसे, किन्तु प्रजारूपेणानुवर्तसे तदेव तवामृतत्वमित्युक्तम् । तदनन्तरमस्याम्नायस्यानुग्राहकन्यायः स्वयं सूत्रकारैर्दर्शितः। 'अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत्' (सू० २.) इति स एव पिता पुत्ररूपेण पृथग्भूतोऽयं सर्वैरपि दृश्यते । अत एव हि द्वयोरपि सारूप्यं दृश्यते देहमात्रं भिन्नमिति । पितुः पुत्ररूपेणानुवृत्तौ सारूप्यमनेन युक्ततयोपन्यस्तम् । अस्तु पुत्ररूपेणानुवृत्तिः किमेतावतेत्याकांक्षायामनन्तरमुक्तं 'ते शिष्टेषु कर्मसु वर्त्तमानाः पूर्वेषां सांपरायेण कीर्तिं स्वर्गं च वर्धयन्ति' (सू० ३.) 'एवमवरोऽवरः परेषाम्' (सू० ४.) 'आभूतसंप्लवात्ते स्वर्गजितः' (सू० ५.) 'पुनस्स्वर्गे बीजार्था भवन्तीति भविष्यत्पुराणे' (सू० ६.) इति । ते पुत्रपौत्रादयश्चोदि-

तश्राद्धादिकर्मानुष्ठाननिरताः पूर्वेषां पितृपितामहादीनां सांपरायेण परलोकेनान्वितानां कीर्तिं स्वर्गं च वर्धयन्ति । अस्यायं पुत्र इत्यादिप्रसिद्धिभिः श्राद्धादिना कीर्तिं च स्वर्गं च वर्धयन्ति । एवं तत्पुत्रतत्पुत्रादिरपि पूर्वेषां कीर्तिं स्वर्गं च वर्धयति । एवं ते पुत्रपौत्रापुत्रपौत्रादिपरंपरावंतः आप्रळयं स्वर्गवन्तो भवन्ति । प्रळयानन्तरं पुनस्सर्गे सृष्ट्यर्थाः प्रजापतयो भवन्तीति भविष्यत्पुराणे पठ्यत इत्यनेनोक्तम् । तदनन्तरमाश्रमान्तरानिन्दापरं ब्रह्मणो वचनमुदाहृतम् । ‘अथापि प्रजापतेर्वचनम्’ (सू० ७.) त्रयीं विद्यां ब्रह्मचर्यं पजातिं श्रद्धां तपो यज्ञमनुप्रदानम् । य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्निति । (सू० ८.) वेदत्रयाध्ययनं तदर्थं ब्रह्मचर्यं प्रजोत्पादनं वैदिककर्मस्वास्तिक्यमुपवासादिकं सोमयागादिकं अंतर्वेदि बहिर्वेदि च दानमित्येतानि कर्माणि ये कुर्वते तैरेव सह वयं स्मः । तेषामस्मल्लोकप्राप्तिरस्तीति तैरेव सह वसामः । अन्यत्राश्रमान्तरं प्रशंसन् स्तुतिमात्रेणाप्यंगीकुर्वन् पांसुर्भूत्वा नश्यतीत्यनेनोक्तम् । तदनन्तरं यथा विहितकर्मसु वर्तमानाः पुत्रादयः कीर्तिं स्वर्गं च वर्धयन्ति तथा प्रतिषिद्धेषु वर्तमानास्ते अकीर्तिं नरकञ्च वर्धयेयुः इत्याशंकायामुक्तम्—‘तत्र ये पापकृतस्त एव ध्वंसन्ति न परान् हिंसन्ति यथा पर्णं वनस्पतेः । (सू० ९.) नास्यास्मिन् लोके कर्मभिस्संबन्धो विद्यते तथा परस्मिन् कर्मफलैः (सू० १०) तदेतेन वेदितव्यम् । (सू० ११.) प्रजापतेर्ऋषीणामिति सर्गोऽयम् (सू० १२) तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलत्य उपलभ्यन्ते (सू० १३) इत्यनेनेदमुक्तं प्रजासन्ततौ पापकृत एव नश्यन्ति न पित्रादीन्नाशयन्ति यथा वृक्षस्य पर्णं कीटादिभिर्दूषितं चेत् तदेव पततिन वृक्षं वा शाखा

वा पातयति तस्मात् पित्रादीनां दुष्पुत्रादिकृतैः कर्मभिरिह लोके पर-
लोके वा तत्फलैः संबन्धो न विद्यते । तदेतेनोदाहरणेन वेदितव्यम् ।
हिरण्यगर्भस्य दक्षादीनां चायं सर्गः । ते स्वपजापरंपरायां सत्स्वपि
पापकृत्सु सुखेनाद्यापि वर्त्तन्ते । तत्र हिरण्यगर्भस्य दक्षादीनांच सर्गे
ये पुण्यकृतो वसिष्ठादयस्तेषां शरीराण्यपि दीप्यमानानि दृश्यन्ते सप्तर्षि-
मंडलादिषु । न तत्सन्ततौ कस्य चित्पापेन तेषां पतनं दृश्यत इति ।
तदनन्तरं पूर्वपक्षोक्तस्य 'अथापि संकल्पसिद्धयो भवन्ति' इत्यादि-
युक्त्यन्तरस्य परिहार उक्तः 'स्यात्तु कर्मावयवेन तपसा वा कश्चित्
सशरीरोऽन्तवन्तं लोकं जयति संकल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्य-
माश्रमाणाम्' (सू० १४.) इति । गृहस्थोऽन्यो वा यः कश्चिदपि
कर्मादिलेशेन 'ग्रीष्मे पञ्चाग्निमध्यस्थ' इत्याद्युक्तरूपेण तपसा वा
संकल्पसिद्धत्वादिकं लभत इति नाश्रमान्तराणामेव तल्लाभो नियतः ।
अतस्सर्वसाधारणोऽयमाश्रमविशेषाणां जैष्ठ्ये न हेतुरित्यनेनोक्तम् ।
एवञ्च यथा कल्पसूत्रे यज्ञादिकर्मणां 'धर्मेण पापमपनुदति देवानां
दैव्येऽपि यजमानोऽमृतोऽभूत् दिवि ज्योतिरजरमारभेताम्' इत्यादि-
श्रुतिप्रामाण्यादंतःकरणशुद्ध्यादिप्रणालिकया मोक्षफलकत्वेऽपि मोक्षैक-
फलकस्यान्तःकरणशुद्धितत्पूर्वकदृढवैराग्यद्वारा कर्मानुष्ठानेनैव प्राप्यस्य
सन्यासस्य महता यत्नेन पूर्वोत्तरपक्षाभ्यां दूषणं सन्यासफलश्रवणमा-
त्रसन्तुष्टः कश्चिददृढवैराग्येण तत्र प्रवृत्तो मा पप्तत् । गार्हस्थ्ये कर्मा-
नुष्ठानसद्भावात् ततश्चित्तशुद्ध्यतिशयं तेन दृढवैराग्यञ्च लब्ध्वा तद-
नन्तरं सन्यस्तव्यञ्चेत् सन्यस्यत्वित्यभिप्रेत्य, न तु सर्वथा सन्यासनि-
षेधमभिप्रेत्य । 'चत्वार आश्रमाः गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्य-
मिति' (आप. प्र. २. प. ८. ख. २१. सू. १.) तेषु सर्वेषु यथोपदे-

शमव्यग्रो वर्त्तमानः क्षेमं गच्छति' (सू.२.) इति तत्रैव चतुर्णामप्याश्रमाणां महाफलत्वेनाङ्गीकृतत्वात्। तथात्र भाष्ये 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि। (ब्र० ३. २. ११. सू) प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः (ब्र० ३. २. २१. सू) इत्याद्यधिकरणेषु सूत्रार्थकथनमुखेन ईक्षत्यधिकरणादिषु स्ववचनेन च ब्रह्मणो निर्गुणत्वनिष्प्रपञ्चत्वादिदूषणं 'तत्वमस्या' दिमहावाक्यार्थाकर्णनमात्रसन्तुष्टः कश्चिन्निर्विशेषब्रह्मप्रवृत्त्युचितचित्तस्थैर्याभावेऽपि तात्कालिकश्रद्धामात्रेण तत्र प्रवृत्तस्सन् उभयभ्रष्टो मा भूत् सगुणोपासनमहिम्ना तदुचितचित्तस्थैर्यं प्राप्य तदनन्तरं तदुपासने प्रवर्त्तितव्यञ्चेत् प्रवर्ततामित्यभिप्रेत्य, न तु सर्वथा निर्गुणनिषेधमभिप्रेत्य। तत्रैव तदभ्युपगमस्यापि दर्शितत्वादिति भावः। एवञ्च निर्गुणब्रह्माभ्युपगमेन तत्परत्वेन वक्तव्यान्यपि वेदान्तवाक्यानि कथं तत्र तत्र सगुणपरत्वेन योजितानीत्यपि शंका निरस्ता। तेषां सगुणे तात्पर्याभावेऽपि तत्रादरातिशयसिद्ध्यर्थं तत्र तात्पर्यमारोप्य तदर्थतया वर्णनोपपत्तेः 'प्रजामनुप्रजायसे तदु ते मर्त्यामृतम्' इत्याद्यर्थवादानां तात्पर्याविषयेऽप्यर्थे प्रवर्त्यरुच्युत्पत्त्यर्थं प्रमाणतयोपन्यसनदर्शनात्, निर्गुणे महातात्पर्यवतां वेदान्तवाक्यानां तदन्तर्गततत्तत्पदप्रवृत्तिनिमित्तगुणविशिष्टतया प्रथमप्रतीते सगुणेऽप्यवान्तरतात्पर्यसद्भावाच्च ॥ ५५ ॥

नन्वस्त्वेवमेतत्तथापि निर्गुणब्रह्मनिर्णयार्थं भगवता बादरायणेन प्रणीतानि ब्रह्मसूत्राणि कथं सगुणब्रह्मनिर्णयार्थत्वेन भाष्यकारैर्योजितानि तदपि किं सूत्रकाराविवक्षितार्थकल्पनमित्याकांक्षायामाह—

---

१. 'यत्' इति ख पाठः।

**सूत्राणामेतदर्थान्तरमधिगमितं सूत्रकाराशयस्थं**
**केषां चित्तेष्वभीष्टं गुणवति विगुणेऽप्यन्वयं दर्शयद्भिः ।**
**शुद्धब्रह्मैकनिष्ठैरपि शुचिहृदयैश्शंकराचार्यपादैः**
**श्रीकण्ठार्यैस्तु भाष्ये तदिह सुविहितं सर्वसूत्रार्थरूढम् ॥**

अनेकार्थविवक्षया सूत्रप्रणयनं तावत् संभवत्येव । 'सारवद्विश्वतोमुखम्' इति लक्षणानुसारात् पाणिनिजैमिन्यादिसूत्रेषु योगविभागानुवृत्तिवर्णकान्तरकरणादिनानेकार्थपरिग्रहस्य सर्वसंप्रतिपन्नत्वाच्च । ब्रह्मसूत्राणां निर्गुणस्वरूपप्रमाणसाधनफलनिर्णयार्थत्वेनाभिमतानां सगुणब्रह्मस्वरूपादिनिर्णयार्थत्वमपि विवक्षितमिति पूर्वाचार्याणामभिमतं न वेत्येतावदेवावगन्तव्यम् । तदपि निर्गुणस्वरूपादिनिर्णयार्थत्वेन तानि व्याख्यातुं प्रवृत्तैश्शंकरभगवत्पादैरेव तेषु केषाञ्चित्सूत्राणां निर्गुणस्वरूपादिनिर्णयार्थत्वं केषांचित्सगुणस्वरूपनिर्णयार्थत्वं च केषाञ्चिदुभयपरत्वञ्च प्रदर्शयद्भिराविष्कृतम् । तत्र प्रथमाध्याये तावत् 'अन्तस्तद्धर्मोपदेशात् (ब्र. १. १. २१. सू.) सर्वत्र प्रसिद्धोपदेशात् (ब्र. १. २. १. सू.) दहर उत्तरेभ्यः (ब्र. १. ३. १३. सू.) इत्यादिसूत्राणि दिव्यमंगळविग्रहयुक्तस्य सत्यसंकल्पत्वादिकल्याणगुणयुक्तस्य सकलप्रपञ्चसृष्टिपालनसंहारकर्तुर्निरतिशयैश्वर्यशालिनस्सगुणस्य परमेश्वरस्य स्वरूपनिर्णयार्थत्वेन व्याख्यातानि । द्वितीयाध्याये तस्यावाप्तकामस्य सर्वभूतेष्वेकरूपतया दयादिगुणवतः प्रपञ्चस्रष्टृत्वं सुखदुःखादिकरंबितविषमभूतजातस्रष्टृत्वञ्च न संभवतीति विरोधशंकासमाधानार्थत्वेन 'न प्रयोजनवत्त्वात् । (ब्र. २. १. ३२. सू.) लोकवत्तु लीलाकैवल्यम् । (ब्र. २. १. ३३. सू.) वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' इत्यादि (ब्र. २. १. ३४.)

सूत्राणि व्याख्यातानि । सगुणः परमेश्वर एव जगदुपादानमपि न तु विशुद्धचिन्मात्रमिति पक्षे 'न विलक्षणत्वादि' सूत्राण्यपि सगुणविषयाण्येव। तृतीयाध्याये 'फलमत उपपत्तेः' इत्यादि (ब्र. ३. २. ३७.) सूत्राणि सगुणस्य परमेश्वरस्य कर्मोपासनादिफलप्रदतया भोगमोक्षयोस्साधकतमत्वप्रतिष्ठापकत्वेन व्याख्यातानि । तस्मिन्नध्याये गुणोपसंहारपादे निर्गुणविद्योद्गीथविद्यादिविषयाणि सप्ताष्टान्यधिकरणानि विहाय सर्वाण्यप्यधिकरणानि तत्तद्विद्योपासनीयपरमेश्वरगुणविशेषनिर्णयार्थत्वेन व्याख्यातानि । एते च गुणा न ध्यानार्थं वाग्धेनुत्वादिवदुपासकेन कल्पनीयाः। किंतु परमेश्वरे स्वतस्सिद्धा इत्येतत् 'व्यतिहारो विशिंषन्ति हीतरवत्' (३. ३. ३६. सू.) इत्यधिकरणे 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यैतरेयवाक्यार्थविचारे तेन वाक्येन ध्यानार्थं जीवब्रह्मणोरभेदे प्रतिपाद्यमानेऽपि तात्त्विकाभेदस्सिद्ध इत्युक्त्वा यथा ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरस्सिध्यतीति तत्र दृष्टान्ततयोपादानादाविष्कृतम्। चतुर्थाध्याये द्वितीयतृतीयपादयोः 'प्रतिषेधादिति चेन्न शारीरात्।' (ब्र. ४. २. १२. सू.) 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र. ४. ३. ६. सू.) इत्यधिकरणद्वयं विना सर्वाण्यप्यधिकरणानि सगुणोपासकानां तत्प्राप्त्यर्थोत्क्रान्तिगतिनिरूपणार्थतया तद्विषयत्वेनैव व्याख्यातानि। चतुर्थपादेऽप्यादावधिकरणत्रयं विना 'संकल्पादेव तु तच्छ्रुतेः' (ब्र. ४. ४. ८. सू.) इत्यारभ्य सगुणोपासनाफलनिरूपणार्थतया सर्वाण्यप्यधिकरणानि व्याख्यातानि। कानि चिदधिकरणानि सगुणनिर्गुणोभयसाधारणतया व्याख्यातानि । यथा चतु-

१. 'विषयत्वेन' इति ख पाठः ।

र्थाध्यायस्य प्रथमे पादे 'आवृत्तिरसकृदुपदेशात् ।' (ब्र. ४. १. १.) 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च ।' (ब्र. ४. १. ३. सू.) 'आसीनस्संभवात् ।' (ब्र. ४. १. ७. सू.) 'यत्रैकाग्रता तत्राविशेषात् (ब्र. ४. १. ११. सू.) 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र. ४. १. १३. सू.) इत्यादीनि । क्वचित् क्वचित् वर्णकभेदेन सगुणनिर्गुणोभयपरतया व्याख्यानं दृश्यते । यथा 'शास्त्रयोनित्वात्' इति (ब्र. १. १. ३.) सूत्रं सगुणसार्वज्ञ्यव्यवस्थापनार्थं निर्गुणौपनिषदतत्त्वव्यवस्थापनार्थं चेति समासभेदेन द्वेधा व्याख्यातम् । तथा 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इति चतुर्थाध्याय-(ब्र. ४. १. १६.)सूत्रे कल्पतरौ द्वेधा व्याख्यातम् । अग्निहोत्रादिकं तस्मै 'तदधिगम उत्तरपूर्वाघयोः' इति सूत्रे तदधिगमशब्देन प्रस्तुताय निर्विशेषब्रह्मापरोक्षज्ञानरूपाय कार्यायैव । 'विविदिषन्ति यज्ञेन' इत्यादिश्रुतिदर्शनात् । समस्तकर्मबृन्ददाहकत्वेन कर्मजातिविरोधिनोऽपि तस्य ज्ञानस्य नित्ययज्ञादिकर्मविशेषकार्यत्वं नायुक्तम् । समस्तवनदाहकस्यापि दावदहनस्य वनान्तर्गतवेण्वादिकार्यत्वदर्शनादिति निर्गुणविषयकं व्याख्यानम् । अग्निहोत्रादि तस्य सगुणब्रह्माधिगमस्य कार्यायैव । सगुणविदां केकयादीनां यज्ञाद्यनुष्ठानदर्शनात् । निर्गुणविद्याफलस्येव सगुणविद्याफलस्य कर्मकार्यत्वं नायुक्तम् । ब्रह्मलौकिकभोगरूपस्य तस्य सातिशयत्वदर्शनादिति तत्कार्यशब्दे समासान्तरमाश्रित्य सगुणविषयं द्वितीयव्याख्यानम् । निर्गुणविषयेष्वप्यधिकरणेषु सगुणप्रसङ्गः प्रायो न त्यक्तः । तेष्वपि जीवादिविषयपूर्वपक्षप्रतिक्षेपाय ब्रह्मलिंगोपन्यासार्थं तत्तन्निर्गुणप्रकरणगतवाक्यविशेषाणामवान्तरतात्पर्यविषयस्सगुणः परमेश्वरः 'सा च प्रशासनात्' पत्या-

दिशब्देभ्य' इत्यादिसूत्रपरामृष्टतया वर्णित एव। किं बहुना। निर्गुणसाक्षात्कारान्मुक्तिरपि सत्यकामत्वादिगुणयुक्तसगुणेश्वरैक्यापत्तिरूपा तत्रतत्र प्रतिपादिता। तथा हि प्रथमाध्याये दहराधिकरणे दहराकाशो वाक्यशेषश्रुतैरपहतपाप्मत्वादिगुणैः परमेश्वर इति प्रसाध्य प्रजापतिविद्यायां जीवेऽप्यपहतपाप्मत्वादिगुणानां श्रवणान्न तेषां परमेश्वरलिंगत्वमित्याशंकामुद्भाव्य तत्परिहारार्थं प्रवृत्तस्य 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति (ब्र. १. ३. १८.) सूत्रस्य मुक्तौ जीवस्य परमेश्वरभावापत्त्यैवापहतपाप्मत्वादिगुणाविर्भाव इति न तेषां ब्रह्मलिंगत्वे काचिदनुपपत्तिरिति तात्पर्यमुक्तम्। तस्मादविद्याप्रत्युपस्थापितं पारमार्थिकञ्चैव रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यत इति। द्वितीयाध्यायेऽपि 'अंशो नानाव्यपदेशात्' (ब्र. २. ३. ४२. सू.) इत्यधिकरणे जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखभोगेन ईश्वरस्यापि दुःखं स्यात्। यथा लोके हस्तपादाद्यन्यतमांगांशगतेन दुःखेनांशिनो देवदत्तस्यापि दुःखित्वं तद्वत्। ततश्च तत्र प्राप्तानां महत्तरं दुःखं प्राप्नुयात् अतो वरं पूर्वावस्थस्संसार एवास्त्विति सम्यग्ज्ञानानर्थक्यप्रसंग इति शंकाग्रन्थेन बिंबप्रतिबिंबभावकृतासंकरमवलंब्य समाहितेन मुक्तस्य बिंबभूतेश्वराभावापत्तिः स्पष्टीकृता। तृतीयाध्यायेऽपि 'सन्ध्ये सृष्टिराह हि' इत्य(ब्र. ३. २. १. सू.)धिकरणे परमेश्वराभिन्नस्य जीवस्यैश्वर्यवशात् स्वप्ने सांकल्पिकी रथादिसृष्टिर्भविष्यतीति शंकोत्तरत्वेनावतारितस्य 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति (ब्र. ३. २. ४.) सूत्रस्य तात्पर्यकथनावसरे 'जीवेश्वरयोस्सत्यप्यंशांशित्वे प्रत्यक्षमेव जीवस्य

ईश्वरविपरीतधर्मत्वम्। किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव। न नास्त्येव। विद्यमानमपि तु तत्तिरोहितमविद्यादिव्यवधानात्। तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेन दृक्छिक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्य चिदेवाविर्भवति' इति ग्रन्थसन्दर्भेण मुक्तस्यापहतपाप्मत्वादिगुणकेश्वरभावापत्तिर्वर्णिता। चतुर्थाध्यायेऽपि 'स्वेन रूपेणाभिनिष्पद्यत' इति मुच्यमानविषयायां श्रुतौ केन रूपेणाभिनिष्पत्तिर्विवक्षितेति बुभुत्सायां 'ब्राह्मेण जैमिनिरुपन्यासादिभ्य.' इति (ब्र. ४. ४. ५) सूत्रेण यद्ब्राह्मं रूपमपहतपाप्मत्वादि सत्यसंकल्पत्वावसानं सर्वज्ञत्वसर्वेश्वरत्वादि च तेनाभिनिष्पत्तिः 'य आत्मापहतपाप्मा' इत्याद्युपन्यासेन 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' इत्याद्यैश्वर्यावेदनेन चेति जैमिनिमतं 'चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' इत्यनन्तर (ब्र. ४. ४. ६.) सूत्रेण 'एवं वा अरे अयमात्मानन्तरोऽब्राह्यः कृत्स्नः प्रज्ञानघन एव' इत्यादिश्रुत्या चैतन्यमात्रमात्मनः स्वरूपमित्यवगतेस्तन्मात्रेणाभिनिष्पत्तिरिति मतान्तरं चोपन्यस्य तदनन्तरपठितस्य 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण' इति सिद्धान्त (ब्र. ४. ४. ७.) सूत्रस्य 'एवमपि पारमार्थिकचैतन्यस्वरूपत्वाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यत' इति तात्पर्यकथनेन मुक्तस्य निरतिशयैश्वर्यशालिसगुणेश्वरापत्तिः स्फुटीकृता। निर्गुणब्रह्मपादे तद्भावापत्तिरेव मुक्तिरिति वक्तव्ये कथं सगुणेश्वरभावापत्तिर्मुक्तिरुच्यत इति शंका च समाहिता। वस्तुदृष्ट्या मुक्तस्य चैतन्यमात्रत्वेऽपि बिंबभूतपरमे-

श्वरभावं प्राप्तस्य परमेश्वरवदेव बुद्धपुरुषव्यवहारदृष्ट्या यावत्सर्व-
मुक्ति निरतिशयमैश्वर्यं पारमेश्वरत्वेन प्रसिद्धम् अन्यच्च सकलं धर्म-
जातं संभवतीति। अयमर्थः सिद्धान्तसंग्रहेऽप्यस्माभिः प्रपञ्चित इति।
एवञ्च यथा चतुर्ष्वपि वेदेषु सर्वप्राण्यनुग्रहार्थं ब्रह्मभावावाप्तिरूपमहा-
पुरुषार्थप्रतिपादनैदंपर्येणैव प्रवृत्तेषु तदुपयोग्यन्तःकरणशुद्धिजनकक-
र्मनिरूपणार्थ एव भूयान् प्रपञ्चः ब्रह्मनिरूपणार्थो वेदान्तभागस्तु
निरूपणीयबाहुळ्याभावात् स्वल्पः। तथा भगवत्पादीये भाष्ये निर्विशे-
षब्रह्मभावावाप्त्यर्थं तन्निदिध्यासनापेक्षितचित्तस्थैर्याद्युपयोग्युपासनाराध-
नीयसगुणेश्वरप्रसंग एव भूयान्निर्गुणस्वरूपविचारांशस्तु निरूपणीय-
बाहुळ्याभावात् स्वल्पः। एवं निरूपितस्सगुणश्च शिव एव न
तु विष्णुरित्यपि शंकरभगवत्पादानामाशय उन्नीयते। अन्तरादि-
त्यविद्याधिकरणेषु सगुणप्रसंगे सर्वत्र प्रायश्शिवासाधारणेन परमेश्वरश-
ब्देन तद्व्यवहारात् दहराधिकरणे 'परमेश्वर एवात्र दहराकाशो भवि-
तुमर्हति न भूताकाशो जीवो वा' इति सिद्धान्तमुपक्रम्य "यदिदमस्मिन्
ब्रह्मपुर' इति पूर्ववाक्ये ब्रह्मशब्देन जीव उच्यते तस्य देहरूपपुर-
स्वामित्वादतः प्राक्प्रकृतस्स एव दहराकाशो भवितुमर्हति' इति
शंकापरिहारप्रस्तावे 'अथवा जीवपुर एवास्मिन् ब्रह्म सन्निहितमुपल-
क्ष्यते यथा सालग्रामे विष्णुस्सन्निहित' इति स्वाभिमतस्य परब्रह्मणो
विष्णोश्च दृष्टान्तदार्ष्टान्तिकभावेन भेदनिर्देशाच्च। तस्मिन्नेव ह्यधिक-
रणे 'यद्यप्याकाशशब्दो भूताकाशे रूढस्तथापि तेनैव तस्योपमा
नोपपद्यत' इति 'भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानो-
पमेयभावाद्यसंभवान्न ग्रहीतव्य' इति च पूर्वापरग्रन्थयोः 'यावान्वा एषो-
ऽन्तर्हृदय आकाश' इत्युपमानोपमेयभावनिर्देशात् न दहराकाशो

भूताकाश' इत्युक्तम् । स्वयमेव तस्मिन्नेव संदर्भे उपमानोपमेय-भावनिर्देशं भेदकमुक्त्वा कथं ब्रह्मणो विष्णोश्च भेदानुमितौ तयोरुपमानोपमेयभावं निर्दिशेयुः । यत्तु यावदधिकाराधिकरण-भाष्यम् 'अपान्तरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात् कलिद्वापरयोस्सन्धौ कृष्णद्वैपायनस्संबभूव । सनत्कुमारोऽपि ब्रह्मणो मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव' इति तत्प्रवृत्तिभंग्या विष्णोरुत्कर्षः प्रतीयमानस्संहाररुद्रांशभूताद्विधातुः प्रादुर्भूतान्नीललोहितरुद्रादेव । कुमारसंभवोपाख्यानस्य तद्विषयत्वात् न तु मायोपाधिकसगुणब्रह्मरूपात् परमशिवादिति न विरोधः । एवं शुद्धाद्वैतप्रतिष्ठापनैकनिष्ठैरपि शुद्धहृदयतया स्वमतविरुद्धत्वेन मन्द-धियामापाततः प्रतीयमानं सगुणमप्रच्छाद्य तद्विषयतयापि कानि-चित् सूत्राणि योजितवद्भिश्शंकराचार्यैस्सर्वेषां सूत्राणां सगुणनिर्गुणो-भयपरत्वमपि संभवतीति ब्रह्मविचारप्रतिज्ञापराद्यसूत्रे श्रुतब्रह्मशब्दस्य 'अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वशक्तिसमन्वितं च । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्त' इति सगुणनिर्गुणोभयपरत्ववचनेन क्वचिच्छास्त्रयोनिसूत्रे स्थालीपुला-कन्यायात्सगुणनिर्गुणोभयपरयोजनाद्वयेन च प्रदर्शितम् । एतां सरणिमास्थाय सर्वेषामपि सूत्राणां सगुणेश्वरविषयतयापि योजनान्तरं सूत्रकाराभिमतमिति पूर्वाचार्यपरंपराप्राप्तमुपदेशमपि प्रमाणीकृत्य श्री-कण्ठाचार्यास्सर्वसूत्राधिरूढं सगुणविषययोजनं प्रदर्शयन्तो भाष्यमिदं प्रणिन्युः । इयांस्तु विशेषः । शंकराचार्यैस्सगुणमपि ब्रह्म तत्र तत्र सूत्राधिरूढं कृतम् । श्रीकण्ठाचार्यैस्तु निर्गुणं क्वचिदपि सूत्राधिरूढं न कृतं प्रत्युत निर्गुणविषयतया स्पष्टं प्रतीयमानान्यपि सूत्राणि यत्नेन

सगुणविषयतया योजितानि । भाष्ये स्ववाक्यच्छायया परं क्वचित् क्वचित् निर्गुणाभिप्रायो द्योतितः । तत्र प्रयोजनमुक्तमेव । तामेव शैलीमनुसृत्यास्माभिरपि निर्गुणद्योतकानि भाष्यवाक्यानि प्रायस्सगुणानुकूलतया यत्नेन शिवादित्यमणिदीपिकायां योजितानि । इहापि विशिष्टाद्वैतनिरूपणप्रकरणे सैव रीतिरनुसृता । इह तु शुद्धाद्वैतमताविष्करणप्रकरणे तानि भाष्यवाक्यानि शुद्धब्रह्मस्वरूपाविष्करणार्थतयाञ्जस्येन योजितानीति सर्वं समञ्जसम् ॥

नन्वाचार्यभाष्यवद्रामानुजभाष्यस्यापि शुद्धाद्वैते पर्यवसानमुक्तरीत्यैव वक्तुं शक्यम् । अविशिष्टं ह्युभयत्रापि स्थूलचिदचिद्वस्तुविशिष्टं ब्रह्म कार्यं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणमिति कार्यकारणोभयावस्थं ब्रह्म विशिष्टाद्वैतरूपं सगुणं रूपवत् परशक्त्युपेतं नित्यमुक्तेन भजनेन प्रपञ्चोत्तीर्णलोकावस्थिततत्सालोक्यप्राप्तिर्मुक्तिरित्यादि सिद्धान्तवर्णनमित्याशंक्याह—

**श्रीकण्ठाचार्यभाष्योक्त्यनुकृतिसरणिः क्वापि भाष्ये परेषां**
**प्रायो दृष्टा विशिष्टाद्वयपरगुणितावर्णनादिप्रपञ्चे ।**
**साम्येऽप्येवं न शुद्धाद्वयसमुपगतिश्शक्यते तत्र वक्तुं**
**तस्यालिंगस्य वक्तुर्न खलु कियदभिव्यञ्जनं क्वापि दृष्टम् ॥**

सत्यमेतत्तथाप्याचार्यभाष्य इव रामानुजभाष्ये शुद्धाद्वैतं परमसिद्धान्त इत्यभ्युपगमसूचकं नास्ति व्यञ्जितमपि लिंगम् । न हि तत्र प्रपञ्चस्य निर्विकारब्रह्मविवर्त्ततातपर्यावसानाभ्युपगमसूचकं प्रपञ्चपरिणामिन्याश्शक्तेर्ब्रह्माभिन्नत्वमभ्युपगतम् । प्रकृतिरूपा जडशक्तिः प्रपञ्चपरिणामिनीत्येव तत्र वर्णितत्वात् चिच्छक्तेः प्रपञ्चपरि-

णामित्वस्य तत्र निराकृतत्वात् चिच्छक्तेर्ब्रह्माभिन्नत्वस्याप्यनभ्युपगमाच्च । न वा तत्र जीवब्रह्माभेदाभ्युपगमसूचकं स्वाभेदेनोपासनं मुक्तावपि ब्रह्माभेदबोधानुवृत्तिरित्याद्यभ्युपगतमस्ति । उपासनावस्थायां मुक्त्यवस्थायाञ्च जीवब्रह्मणोश्शेषशेषिभावबोधानुवृत्तेरेवाभ्युपगतत्वात् । 'नापि सन्घट' इत्यादि प्रत्यक्षं ब्रह्मसत्ताविषयम् 'अहं सुखी' इत्यादि प्रत्यक्षं स्वस्वबुद्ध्यवच्छिन्नब्रह्मानन्दविषयं 'स्फुरति घट' इत्यादि प्रत्यक्षं घटाद्यवच्छिन्नब्रह्मस्फुरणविषयं 'निरन्वयोपासकानामिहैव मुक्तिः' इत्यादि शुद्धाद्वैताभ्युपगमानुगुणार्थप्रतिपादनमस्ति सर्वत्र तद्भाष्ये शुद्धाद्वैतव्यवस्थापनस्यैवाभ्युपगमसूचकम् । यतस्तैर्भेदे सत्येव तस्य मुक्तं प्रति पुरुषार्थत्वसाधनाय बहुधा प्रयस्तम् । किं बहुना । मुक्तौ स्वस्वामिभावरूपभेदानुसन्धानपूर्वकं भगवद्भागवतकैंकर्यमपि प्राभाकरैर्नियोगनिर्वर्त्तनमिव तैः स्वतः पुरुषार्थत्वेन साधितम् । भागवतानामन्योन्यशेषत्वं न विरुद्धमित्यपि महता यत्नेन साधितम् । तथा माध्वैरुक्तमपि तन्न शुद्धाद्वैताभ्युपगमसूचकम् । यतस्तैर्मुक्तावपि भेदं प्रमाणमंगीकृत्य सन्मुक्तिरसन्मुक्तिरिति मुक्तौ भेदञ्च कल्पयित्वा देवास्सन्मुक्तिं प्राप्ताः परब्रह्मणो नारायणस्य शरीरे लीनास्सन्तस्तदीयैरेव कर्मेन्द्रियज्ञानेंद्रियैस्तत्तदिन्द्रियसाध्यान् भुञ्जाना विहरन्ति । मनुष्यादयस्तु, मुक्तास्तच्छरीरे लयमप्राप्य स्वस्वशरीरेन्द्रियैरेव विषयान् भुञ्जाना विहरन्ति । सर्वेऽपि ब्रह्मानंदमपि परमपुरुषार्थतयानुभवन्तः स्वस्वाधिकारानुगुणोपास्यगुणोपासनाकालोपासनासहकारिकर्मबृन्दोपासनासाध्यसाक्षात्कारानुष्ठेयकर्मबृन्दमुक्त्यनन्तरकालस्वच्छन्दानुष्ठितोपासनाकर्मबृन्दतारतम्यानुसारतारतम्यमेव ब्रह्मानन्दमनुभवन्ति । एवं भगवत्तत्त्वज्ञानभक्तिभ्यां सन्मुक्तिं प्राप्ताः स्वयमप्यान-

न्दरूपस्वात्मानन्ददर्शनमनुभवन्ति । तस्मात् किञ्चित्सारूप्यमात्रेणा-चार्यभाष्यवत्तदनुकरणेन प्रवृत्तस्य रामानुजभाष्यस्य शुद्धाद्वैते पर्यव-सानमशक्यमुपपादयितुमित्यर्थः ॥ ५७ ॥

ननु रामानुजभाष्ये जीवब्रह्माभेदाभ्युपगमसूचकमपि किञ्चि-दुक्तमस्ति । तत्र हि संसारदशायां ब्रह्मानन्दस्य जीवभोग्यत्वानुक्ता-वपि मुक्तिदशायां तस्य तद्भोग्यत्वमाचार्यभाष्ये समधिगतमुक्तम् । तत्तयोरभेदाभ्युपगमसूचकम् । अन्यानन्दस्यान्यं प्रति अपुरुषार्थ-त्वात् । तथैव मध्वभाष्येऽप्युक्तम् । तत्र जीवगतस्य बन्धस्य मिथ्या-त्वं ब्रह्मगतस्य जीवगतव्यावर्तकगुणजातस्य धर्मभिन्नस्य राहित्यं ब्रह्मणश्च मुमुक्षुज्ञेयस्यानुपास्यत्वं जीवस्य ब्रह्मप्रतिबिंबत्वं ज्ञाननि-वर्त्यभावरूपाविद्यासत्वमित्यादि जीवब्रह्माभेदोपोद्बलकमधिकमुक्तम् । अतस्तयोरपि शुद्धाद्वैतपर्यवसायित्वमुपपादयितुं शक्यमित्याशंक्य तामुद्भाव्य परिहरति—

**ब्रह्मानन्दस्य तस्मिन्निह समधिगतं मुक्तभोग्यत्वमुक्तं**
**तज्जीवब्रह्मभेदप्रतिहतिकरणञ्चान्यदन्यत्र भाष्ये ।**
**तत्स्वव्याहत्यदृष्ट्या कथमपि न तयोस्तात्त्विकाभेददृष्ट्या**
**बद्धद्वेषा हि शुद्धे गुणवति च शिवे ते दधीचादिशप्ताः ॥**

रामानुजीयैर्माध्वैश्च ब्रह्मानन्दस्य मुक्तभोग्यत्वं यदुक्तं तन्न शुद्धाद्वैतसूचकम् । तैर्हि भगवत्तत्त्वज्ञानभक्तिभ्यां सन्मुक्तिं प्राप्ताः ब्रह्मा-नन्दं वैषयिकानन्दञ्चानुभवन्तो न कदाचिन्निवर्तन्ते । भगवन्मिथ्या-ज्ञानदोषाभ्यामसन्मुक्तिं प्राप्तास्तु महानरकेषु त्रिषु निपतिताः स्वय-मपि दुःखैकरूपाः स्वात्मदुःखं नरकदुःखञ्चानुभवन्तो न कदाचिन्न-रकेभ्य उत्तिष्ठन्तीति मुक्तिस्वरूपं वर्णितम् । न चास्मान्मुक्तिद्वया-

दधिका निर्विशेषब्रह्मभावावाप्तिरूपा मुक्तिः श्रीकण्ठाचार्यैरिव तैरुभयैरपि क्वचिदप्यंगीकार्यत्वेन व्यञ्जिता । यत्तु माध्वैरभ्युपगतं बन्धमिथ्यात्वादिकमद्वैतानुगुणमिव प्रतिभाति तदपि तैरेवाद्वैताभ्युपगमशंकापरिहारार्थं तदननुगुणत्वेन समर्थितम् । तथाहि— बन्धस्य जीवे मिथ्यात्वेऽपि अंतःकरणे सत्यत्वं ब्रह्मगुणानादिधर्माणामिहाभेदेऽपि प्रतिषेधविशेषस्यापि सत्वं मुमुक्षुभिर्ब्रह्मसाक्षात्कारार्थं वस्तुतो भिन्नस्यैव कस्यचित् अंतःकरणस्य तत्प्रातिबिंबोपास्यत्वं ब्रह्मजीवयोर्मुखप्रतिमुखादिकयोश्च बिंबप्रतिबिंबयोर्वस्तुतो भिन्नत्वं ज्ञाननिवर्त्याया भावरूपाविद्यायास्सत्यत्वमित्यादि समर्थितम् । यद्यप्यन्यानंदस्यान्यं प्रति पुरुषार्थत्वमशक्यमित्यादिहेतोर्ब्रह्मानन्दो मुक्तभोग्य इत्याद्युररीकरणमद्वैतपर्यवसानापादकतया स्वव्याघातकं, तथापि अनिवार्यपातनस्वव्याघातादृष्ट्या तैरिदं नाद्वैताभ्युपगमदृष्ट्या । आचार्यभाष्य इव तदीयभाष्यादिग्रन्थे शुद्धाद्वैताभ्युपगमस्याभावात् । तदीयभाष्यकारप्रभृतिभिरद्यतनपर्यन्तैर्विविधैरपि गौतमदधीच्युपमन्युनन्दिकेश्वरादिशापसञ्जातशुद्धाद्वैतपरमशिवोत्कर्षद्वेषकलुषैः परमशिवोत्कर्षस्येव वैष्णवमन्यैर्निर्विशेषब्रह्माद्वैतस्यापि बहुधा विनिंद्यमानत्वस्यैव दर्शनाच्चेति भावः ॥ ५८ ॥

नन्वेवं रामानुजभाष्यमिवाचार्यभाष्यमपि सगुणमात्रपर्यवसायि किं न स्यात् । तन्निरूपणमेव तत्र तत्र सूत्रारूढतया तत्र कृतं दृश्यते । तस्य च नित्यत्वादिति (ब्र० २. ४. १६.) सूत्रार्थत्वेन जीवानां ब्रह्मणश्चानपायिमुक्तावप्यनुवर्तमानश्शेषशेषिभावोऽपि वर्णित इति मन्दशंकानिराकरणार्थं प्राक् प्रपञ्चितरामानुजभाष्यादिवैषम्यं बुद्धिसौकर्याय संकलय्य स्मारयति—

बोद्धव्यं यद्विशेषोऽभिमतमतमिदं निर्गुणब्रह्मरूपं
यच्चोपास्यं निरादीनवनिखिलगुणं नीलकण्ठं त्रिनेत्रम् ।
स्वस्वामित्वाभिदाभ्यां द्विविधमभिमतं तस्य चोपासनं य-
त्तत्सर्वं भाष्यरत्ने स्फुटमकथि खलु श्रीमदाचार्यपादैः ॥

स्यादेवमाशंकावकाशवती, यद्याचार्यभाष्ये निर्गुणं निष्प्रपञ्चं ज्ञेयं ब्रह्म तस्य चाभेदेन निदिध्यासनमभेदावबोधस्य मुक्तावप्यनुवृत्ति-रित्यादिकं स्वमतत्वेन न प्रतिपादितम् । तदपि प्रतिपादितमिति बहु-विधोदाहरणमुखेन प्राक्प्रपञ्चितम् । अतः पूर्वोक्तदिशैव द्विविधाना-मपि भाष्यवाक्यानां व्यवस्थापितत्वादिति सूत्रार्थतया शेषशेषिभावस्य नित्यत्वकथनमपि चातुर्मास्यसुकृतस्याक्षय्यत्वकथनवत् आपेक्षिकार्थ-विषयतया योजनीयमिति भावः ॥ ५९ ॥

नन्वेवं तर्हि शंकरभगवत्पदभाष्याच्छायापन्नमेवेदमपि भाष्य-मित्यायातं, तस्मिन् जाग्रति किमनेनेति मंदशंकानिराकरणाय प्राक्प्रप-ञ्चितान्यसाधारणप्रयोजनानि बुद्धिसौकर्यार्थं संकलय्य स्मारयति सर्व-मर्थं प्रकरणप्रतिपिपादयिषितत्वेन संगमयति च—

यत्सूक्तैरेव बोध्यास्सगुणगुणवपुर्मुक्तिलीलाविशेषा-
स्तस्योपास्तिप्रकारास्सफलसरणयस्सूत्रतात्पर्यभेदाः ।
वेदान्तानां व्यवस्था परशिवपरमाकाशयोस्तत्वभाष्ये
तद्भाष्यं दुर्मतीनां प्रभवति विदधद्वैदिकश्रीसमृद्धिम् ॥

श्रीमदप्पय्यदीक्षितकृतिरानन्दलहरी संपूर्णा ॥

सत्यं शंकरभगवत्पादभाष्यानुसार्येवेदमाचार्यभाष्यं तथापि तस्मिन्भाष्ये मायोपाधिकसगुणब्रह्मास्तित्वमवगतं न तु तस्य षडं-

गदशाव्ययादिगुणाः, नीलकण्ठत्वादिविशिष्टमूर्तिरुमाशक्तिः, कालकूटनिगरणादयो लीलाः, स्वस्वामिभेदेनाभेदेन च उपासनार्थप्रकारविशेषपरमशक्त्युमाशाबल्यनीलकण्ठत्वविरूपाक्षत्वादीनां सर्वविद्यासूपसंहारः, सर्वे...............चेतनपरित्याग इत्याद्याः परमानन्दमहाकैलासप्राप्तिरूपेण परविष्णुलोकमप्यातिवाहिककोटौ निवेश्य निरूपणीयेन तत्प्रापकमार्गेण च सहिताः, सर्वेष्वप्येतेष्वर्थेषु ब्रह्मसूत्राणां महातात्पर्यावान्तरतात्पर्यभेदास्सगुणब्रह्मविषयावान्तरतातात्पर्यवत्सु वेदान्तवाक्येषु केषाञ्चिद्विशिष्टरूपस्य सगुणब्रह्मणो विशेष्यांशे जीवे तात्पर्यं केषाञ्चिद्विशेषणांशे जीवे तात्पर्यमित्येवं व्यवस्थाश्चावगताः । ते सर्वेऽप्यस्यैव भाष्यस्य सूक्तिभिरेवावगन्तव्याः । यद्यप्यस्मिन्भाष्ये समुदाहृतैः श्रुतिस्मृतिपुराणागमेतिहासवाक्यैस्ते प्रतिपादिताः । तैरवगतिसंभवे च सूत्राणामवान्तरतात्पर्योपगमेन भाष्यान्तरं न प्रवर्त्तनीयम् । शिवपरमाकाशपरसगुणविषयवेदान्तभागव्यवस्थाश्च तद्विषयकूर्मपुराणादिवचनानुसारेणावगन्तुं शक्या न कर्तव्याः । तथापि न तैः निर्धारणरूपावगतिस्संभवति । तेषां कुदृष्टिभिरन्यथानीयमानतया ततो वैदिकानामपि चित्तक्षोभसंभवात् । अतः 'सा हि श्रीरमृता सताम्' इति श्रुतेर्वैदिकानां या श्रीस्त्रिवेदी तस्यास्समृद्धिर्महातात्पर्यावान्तरतात्पर्यविषयार्थतत्वावबोधनयोग्यतदर्थानुष्ठापनतत्फलप्रापणैरुपचयं वैदिकमार्गप्रतिष्ठापनरूपं संविधानं तत्परिपन्थिकुदृष्टिकुलजल्पितदूषणानवकाशीकरणं तन्मतदूषणञ्च कुर्वदिदं भाष्यं सार्थकमेव । यद्यप्यस्मिन्भाष्ये परापादितदूषणोद्धरणं कण्ठोक्त्या कृतं न दृश्यते, तथापि यथा महान् प्रभुः स्वराज्यरक्षणार्थं चोरप्रवेशानवकाशीकरणं तेषां निग्रहश्च स्वकीयैर्भ्रूक्षेपकिंकरैः कर्त्तव्यमिति सप्रकारं भ्रूसंज्ञया व्यञ्जयति

तथा विद्यासाम्राज्यसिंहासनारूढमहाप्रभुकल्पमिदं भाष्यं तत्सर्वं व्याख्यातृभिः कर्त्तव्यमित्युक्तिभंग्यैव सप्रकारं व्यञ्जयति ॥ ६० ॥

श्रीमहेश्वराय नमः ॥

श्रीमदद्वैतविद्याचार्यवर्यभारद्वाजकुलजलधिकौस्तुभ
श्रीरंगराजाध्वरीन्द्रतनयश्रीमदप्पय्यदीक्षित
कृतिषु आनन्दलहरीव्याख्या चन्द्रिका
समाप्ता ॥





# ॥ अपीतकुचाम्बास्तवः ॥



आनन्दसिन्धुलहरीममृतांशुमौले-
रासेविनाममृतनिर्मितवर्तिमक्ष्णोः ।
आनन्दवल्लिविततेरमृतार्द्रगुच्छ-
मम्ब स्मराम्यहमपीतकुचे वपुस्ते ॥ १ ॥

निर्निद्रकोकनदकोमलकान्तमम्ब
नित्यं सुधानिकरवर्षि पदं त्वदीयम् ।
मूर्छाकरज्वररुजा मम तापितस्य
मूर्ध्नि क्षणं सकृदपीतकुचे निधेहि ॥ २ ॥

शीतांशुकोटिसुषुमाशिशिरैः कटाक्षै-
रव्याजभूतकरुणारसपूरपूर्णैः ।
कर्पूरधूलिमिव दिक्षु समाकिरद्भि-
रम्ब क्षणं स्नपय मामरुणाद्रिमान्ये ॥ ३ ॥

आविर्भव क्षणमपीतकुचे पुरस्ता-
दम्ब ज्वरेण महता मम तापितस्य ।
येन त्वदङ्घ्रिरुचिजालसुधाप्रवाहे
मग्नस्तदैव तनुतापममुं त्यजेयम् ॥ ४ ॥

नानाविधैर्नलिनजातलिपिप्रक्लृप्तै-
रानीतमूर्छमधिकं क्षुभितैर्ज्वराद्यैः ।
आश्वासय क्षणमपीतकुचे कराग्र-
क्रीडाकनत्कनकहल्लकसौरभेण ॥ ५ ॥

कण्ठे विषं विषमुचो भुजगाः कपर्दे
पार्श्वे च भूतपतयः प्रमथाश्च भीमाः ।
शोणाचलेशमुपसृत्य भजेत को वा
न स्यात्तवाम्ब सविधे यदि संनिधानम् ॥ ६ ॥

शक्तिर्जगज्जननपालनभञ्जनेषु
भोगेषु दिव्यमहिषी तरुणेन्दुमौलेः ।
सिद्धिः करप्रणयिनी तव संनिधानं
यन्नासि तस्य तदपीतकुचे न जाने ॥ ७ ॥

त्वं साक्षिणी प्रलयभैरवताण्डवानां
त्वं शेषिणी सहरिधातृचराचराणाम् ।
त्वं मोचिनी सकलसंसृतिजालकानां
त्वां ब्रह्मसंविदमपीतकुचे नमामि ॥ ८ ॥

इति श्रीमदद्वैतविद्याचार्य चतुरधिकशतप्रबन्ध-
निर्वाहक श्रीमदप्पय्यदीक्षितेन्द्र-
कृतिषु अपीतकुचाम्बास्तवः
समाप्तः ।

ओं शिवाभ्यां नमः ॥



॥ श्रीः ॥

# आनन्दलहरीस्थ पद्यानामकारादिक्रमेण पत्नपृष्ठसंख्यासूचिनी ॥

---